अथरघुवंशेमहाकाव्येतृतीयसर्गप्रारंभोयं॰

कु॰टी
१

श्रीगणेशायनमः उपाधिगम्योप्यनुपाधिगम्यः समावलोक्योप्यसमावलोक्यः भवोपियोऽभूद भवः शिवोयंज
गत्यपायादपिनः सपायात् १ राज्ञीगर्भमाधत्तेत्युक्तम् संप्रतिगर्भलक्षणानिवर्णयितुंप्रस्तौति अथेति अथगर्भ
धारणानंतरं सुदक्षिणा उपस्थितोदयं प्रासकालं भर्तुर्दिलीपस्यईप्सितंमनोरथं भावेक्तः पुनःसखीजनस्योद्दीक्ष
णानांदृष्टीनांकौमुदीसुखंचंद्रिकाप्रादुर्भावः यद्वा कौमुदीदीपोत्सवतिथिः तदुक्तंभविष्योत्तरे कौमोदंतेजनाय-
स्यांतेनासौकौमुदीमतेति तस्यास्सुखंप्रारंभः अतएवकेचित्कौमुदीसुखमितिपाठंपठंति इक्ष्वाकुकुलस्यसंततेर

अथेप्सितंभर्तुरुपस्थितोदयंसखीजनोद्वीक्षणकौमुदीसुखम् निदानमिक्ष्वाकुकुलस्यसंततेःसुद
क्षिणादोहदलक्षणंदधौ १

विच्छेदस्यनिदानंमूलकारणं निदानंत्वादिकारणमित्यमरः एवंविधंदोहदलक्ष
णं गर्भचिन्हंवक्ष्यमाणंदधौ स्वहृदयेनगर्भहृदयेनचेद्विहृदयागर्भिणी यथाहवाग्भट्टः मातृजत्वस्यहृदये-
मातुश्चहृदयेनतत् संबद्धंतेनगर्भिण्यानेष्टंश्रद्धाविधारणमिति तत्संबंधित्वाद्गर्भोदौहृदमित्युच्यते साचत
द्योगाद्दौहृदिनीति तदुक्तंसंग्रहे द्विहृदयांनारीदौहृदिनीमाचक्षतइति अत्रदोहदलक्षणस्येप्सितत्वेन कौमु- १
दीसुखत्वेनचनिरूपणाद्रूपकालंकारः अस्मिन्सर्गेवंशस्थंवृत्तम् जतौतुवंशस्थमुदीरितंजरौ १ ५

स॰३

नेति मगधस्यराज्ञोऽपत्यंस्त्रीमागधीसुदक्षिणा द्व्यञ्मगधकलिंगसूरमसादणित्यण् ह्रियाकिंचित्किमपीप्सितमि
ष्टं मेमह्यं नशंसति नाचष्टे केषुवस्तुषु स्पृहावतीत्यनुवेलमनुक्षणमाद्दत्त आदृतवान् कर्तरिक्तः आदृतौसाद
रार्चिताविल्यमरः प्रियायाःसखीःसहचरीःउत्तरकोसलेश्वरोदिलीपः पृच्छतिस्म पप्रच्छ लट्स्मेइतिभूतार्थेलट्
सखीनांविश्रंभभूमित्वादितिभावः५उपेत्येति दोहदंगर्भिणीमनोरथः दोहदंदोहृदंश्रद्धालालसञ्चसमेस्मृतं

नमेह्रियाशंसतिकिंचिदीप्सितंस्पृहावतीवस्तुषुकेषुमागधी इतिस्मपृच्छत्यनुवेलमादृतःप्रि
यासखीरुत्तरकोसलेश्वरः५ उपेत्यसादोहददुःखशीलतांयदेववव्रेतदपश्यदाहृतम् नहीष्ट
मस्यास्त्रिदिवेऽपिभूपतेरभूदनासाद्यमधिज्यधन्वनः ६

मितिहलायुधःसा सुदक्षिणा दोहदेन गर्भिणी
मनोरथेन दुःखशीलतांदुःखस्वभावतामुपेत्यप्राप्य यद्वस्तु वव्रे आचकांक्ष तदाहृतमानीतम् भर्त्रेतिशेषःअप
श्यदेव अलभतेत्यर्थः कुतोहियस्मादस्याःसुदक्षिणायाइष्टवस्तु त्रिदिवेपिस्वर्गेपिभूपतेरनासाद्यमनवाप्यंना
भूत् किं याच्ञयानेत्याह अधिज्यधन्वनइति नहिवीरपत्नीनामलभ्यंनामकिंचिदस्तीतिभावः अत्रवाग्भट्टः
पादशोफोविदाहोन्तेश्रद्धाश्चविविधात्मिकेति एतञ्च पत्नीमनोरथपूरणाकरणेदृष्टदोषसंभावान्नतुराज्ञःस्त्री

लौल्यात् तदुक्तम् देयमप्यहितंतस्यैहितोपहितमल्पकम् श्रद्धाविघातेगर्भस्यविकृतिश्च्युतिरेववा अन्यच्च 
दोहदस्याप्रदानेनगर्भोदोषमवाप्नुयादिति ६ क्रमेणेति सास्कदक्षिणा क्रमेणदोहदव्यथांचनिस्तीर्य प्रचीयमा
नावयवापुष्यमाणावयवासती पुराणपत्राणामपगमान्नाशादनंतरं सन्नद्धाः संजाताः प्रत्यग्रत्वात् मनोज्ञाः

क्रमेणनिस्तीर्यचदोहदव्यथांप्रचीयमानावयवाररराजसा पुराणपत्रापगमादनंतरंलतेवसन्न
द्धमनोज्ञपल्लवा ७ दिनेषुगच्छत्सुनितांतपीवरंतदीयमानीलमुखंस्तनद्वयम् तिरश्चकार
भ्रमरावलीढयोःसुजातयोःपंकजकोशयोःश्रियम् ८

पल्लवाःयस्याःसा लतेवरराज ७ लक्षणांत
रंवर्णयति दिनेष्विति दिनेषुदोहददिवसेषुगच्छत्सुसत्सु नितांतपीवरमतिस्थूलं आसमंतान्निलेमुखंवचू
चुकंयस्यतत् तदीयंस्तनद्वयम् भ्रमरैरवलीढयोरभिव्याप्तयोः सुजातयोःसुंदरयोः पंकजकोशयोःप ३
द्ममुकुलयोःश्रियंशोभांतिरश्चकार अत्रवाग्भटः अम्लेष्टतास्तनौपीनौसस्तन्यौकृष्णचूचुकाविति ८

संप्रतिक्षामतारव्यंगर्भलक्षणंवर्णयति शरीरेति शरीरस्यसादात् कार्श्यादसमग्रभूषणापरिमिताभरणा लोध्रपुष्प
वत्पांडुनामुखेनोपलक्षिता सासुदक्षिणा विचेयामृग्यास्तारकायस्यांसा तथोक्ता बिरलनक्षत्रेत्यर्थः तनुप्रकाशेना
ल्पकांतिनाशशिनोपलक्षिता ईषदसमाप्तप्रभाताप्रभातकल्पा प्रभातादीषन्न्यूना तसिलादिष्वाकृत्वसुचइतिप्रभा
तशब्दस्यपुंवद्भावः शर्वरीरात्रिरिवालक्ष्यत शरीरसादादिगर्भलक्षणमाह वाग्भटः क्षामतागरिमाकुक्षेर्मूर्च्छाछ

:शरीरसादादसमग्रभूषणामुखेनसालक्ष्यतलोध्रपांडुना तनुप्रकाशेनविचेयतारकाप्रभात
कल्पाशशिनेवशर्वरी २ तदाननंमृत्सुरभिक्षितीश्वरोरहस्युपाघ्रायनतृप्तिमाययौ करीव
सिक्तंपृषतैःपयोमुचांशुचिव्यपायेवनराजिपल्वलम् ३ र्दिरोचनम् जृंभाप्रसेकःसदनंरोमरा-
ज्याःप्रकाशनमिति२ तदिति क्षितीश्वरोरहसि मृदासुरभिसुगंधि तस्याआननंतदाननंसुदक्षिणामुखंउपाघ्राय तृ
प्तिंनाययौ कः कथमिव शुचिव्यपायेग्रीष्मावसाने शुचिःशुद्धेनुपहतेशृंगाराषाढयोःसितेग्रीष्मेहुतवहेपिस्यादुपधौ
शुद्धमंत्रिणीतिविश्वः पयोमुचांमेघानांपृषतैर्बिंदुभिः पृषंतिबिंदुपृषता इत्यमरः सिक्तमुक्षितंवनराज्याःपल्वलं
वेशंतःपल्वलंचाल्पसरइत्यमरः उपाघ्रायकरीगजइव अत्रकरिवनराजिपल्वलानांकांतकामिनीवदनसमाधि

रनुसंधेयः गर्भिणीनांमृद्भक्षणंलोकेप्रसिद्धमेव एतेनदोहदाख्यंगर्भलक्षणमुच्यते तदाननंसेवितमृत्तिकाल
वंनृपःसमाघ्रायेतिपाठे सेवितोमृत्तिकायाअंशोयेनतादृशंसुखमित्यर्थः ३ दोहदलक्षणेमृद्भक्षणेहेत्वंतरमुत्प्रे-
क्षते दिवमिति हियस्माद्दिगंतविश्रांतरथश्चक्रवर्ती तस्याःसुतस्तत्सुतः मत्सुतइतिपाठः मरुत्वानिं

दिवंमरुत्वानिवभोक्ष्यतेमहींदिगंतविश्रांतरथोहितत्सुतः
अतोभिलाषेप्रथमंतथाविधेमनोबबंधान्यरसान्विलंघ्यसा ४

द्रः इंद्रोमरुत्वान्मघवेत्यमरः दिवंस्वर्गमिवमहींभोक्ष्यते भुजोऽनवनइत्यात्मनेपदम् अतःप्रथमंसासुदक्षिणा त-
स्याविधेप्रकृविकारे मृद्रूपअभिलष्यतइत्यभिलाषोभोग्यवस्तु तस्मिन् कर्मणिघञ् प्रत्ययः रस्यंते स्वाद्यंतेइतिरसा
भोग्यार्थाः अन्येचतेरसाश्चतान् विलंघ्यविहायमनोबबंधनिदधौ दोहदहेतुकस्यमृद्भक्षणस्यपुत्रस्यभोगसूचनार्थ-
त्वमुत्प्रेक्षितं ४ २

निधानेनेति नृपः ससत्त्वां आपन्नसत्त्वां गर्भिणीमित्यर्थः आपन्नसत्त्वास्याद्गुर्विण्यंतर्वत्नीच गर्भिणीत्यमरः महिषीं निधा
नं निधिर्गर्भे यस्यास्तां सागरांबरां समुद्रवसनां भूमिमित्यर्थः भूतधात्री रत्नगर्भा विपुला सागरांबरेत्यमरः तामिव अभ्यं-
तरे लीनः पावको यस्यास्तां शमीमिव शमीतरौ वन्हिरस्तीत्यत्र लिंगं शमीगर्भादग्निं मंथतीति अंतः सलिलामंतर्गतजलां
सरस्वतीं नदीमिव अमन्यत एतेन गर्भस्य भाग्यवत्त्व तेजस्वित्व पावनत्वानि विवक्षितानि ९ प्रियेति धीरः स राजा प्रिया

निधानगर्भामिव सागरांबरां शमीमिवाभ्यंतरलीनपावकाम् नदीमिवांतःसलिलां सरस्वतीं
नृपः ससत्त्वां महिषीममन्यत ९ प्रियानुरागस्य मनःसमुन्नतेर्भुजार्जितानां च दिगंतसंपदाम्
यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशीर्व्यधत्त सः १० प्रियानुरागस्य स्नेहस्य मनसः समुन्नते रौदार्य
स्य च भुजबलेनार्जितानां करेणार्जितानां न तु वाणिज्यादिना दिगंतेषु संपदां धृतेः पुत्रो मे भविष्यतीति संतोषस्य च धृ
तिर्योगांतरे धैर्ये धारणा रतितुष्टिषु इति विश्वः सदृशीरनुरूपाः पुमान् सूयतेऽनेनेति पुंसवनं तदादिर्यासां ताः क्रियाः
यथाक्रमं क्रममनतिक्रम्य व्यधत्त कृतवान् आदिशब्देन अनवलोभन सीमंतोन्नयने गृह्येते अत्र मासि द्वितीये वा पुंसव
नं यदहः पुंसा नक्षत्रेण चंद्रमा युक्तः स्यादिति पारस्करः चतुर्थेऽनवलोभनमित्याश्वलायनः षष्ठेऽष्टमे वा सीमंत इति याज्ञ
वल्क्यः १०

सुरेंद्रमात्रेति गृहागतोनृपः सुरेंद्राणांलोकपालानांमात्राभिरंशैराश्रितस्यानुप्रविष्टस्यगर्भस्यगौरवात् प्रयत्नेन
मुक्तासनया आसनादुत्थितयेत्यर्थः उपचारस्यांजलावंजलिकरणेखिन्नहस्तया पारिप्लुवनेत्रया तरलाक्ष्या चंच
लंतरलंचैवंपारिप्लुवपरिप्लुवेइत्यमरः तयासुदक्षिणयाननंद सुरेंद्रमात्राश्रितेत्यत्रमनुः अष्टाभिश्चसुरेंद्राणां
मात्राभिर्निर्मितोनृपइति ११ कुमारेति अथकुमारभृत्याबालचिकित्सा संज्ञायांसमजनिषदेत्यादिनाक्यप् तस्यां

सुरेंद्रमात्राश्रितगर्भगौरवात्प्रयत्नमुक्तासनयागृहागतः तयोपचारांजलिखिन्नहस्तयाननंद
पारिप्लुवनेत्रयानृपः ११ कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथगर्भभर्मणि पतिःप्रतीतःप्र-
सवोन्मुखींप्रियांददर्शकालेदिवमभ्रितामिव १२ कुशलैः कृतिभिः कृतीकुशलइत्यपीत्यमरः आप्तैर्हितैर्भि
षग्भिर्वैद्यैः भिषग्वैद्यौचिकित्सकावित्यमरः गर्भस्यभर्मणिपोषणे भर्महेमभृतिर्भ्रमइतिशाश्वतः भृञोमनिन्प्र
त्ययः अनुष्ठितेकृतेसति कालेदशमेमासि अन्यत्रग्रीष्मावसानेप्रसवस्यगर्भमोचनस्योन्मुखीं आसन्नप्रसवामित्यर्थः
स्यादुत्पादेफलेपुष्पेप्रसवोगर्भमोचनइत्यमरः प्रियांभार्यां अभ्राण्यस्याःसंजातानिअभ्रिता तदस्यसंजातं तार ४
कादिभ्यइतजितीतच्प्रत्ययः तांदिवमिव पतिर्भर्ता प्रतीतोहृष्टःसन् ख्यातेहृष्टेप्रतीतइत्यमरः ददर्श दृष्टवान्

गर्भवेश्मनीतिपाठे ऽनुष्ठितइत्यत्राधिष्ठितइतिज्ञेयम् गर्भभर्मणीतिपाठे गर्भाधानप्रतीतावौचित्यभंगः १२
ग्रहैरिति ततः शच्याइंद्राण्या समा पुलोमजाशचींद्राणीत्यमरः सास्रुदक्षिणासमये प्रसूतिकालेसति द
शमेमासीत्यर्थः दशमेमासिजायतेइतिश्रुतेः उच्चसंश्रयैरुच्चसंस्थैस्तुंगस्थानगैः असूर्यगैरनस्तमितैः कैश्चि
द्यथासंभवंपंचभिर्ग्रहैः सूचिताभाग्यसंपद्यस्य तंपुत्रं त्रीणिप्रभावमंत्रोत्साहात्मकानिसाधनान्युत्पादकानियस्याः

ग्रहैस्ततः पंचभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसंपदम्

सात्रिसाधनाशक्तिः शक्तयस्तिस्रः प्रभावोत्साहमंत्रजाइत्यमरः अक्षयमर्थमिव असूत षूङ्प्राणिगर्भविमोच
नइत्यदादिष्वपठ्यते तस्माद्धातोः कर्तरिलङ् अत्रेदमनुसंधेयम् अजवृषभमृगांगनाकुलीराझषवणिजौ
चदिवाकरादितुंगाः दशशिखिमनुयुक्तिथींद्रियांशैस्त्रिनवकविंशतिभिश्चते ऽस्तनीचाइति सूर्यादी

लघु·टी० नांसमानांग्रहाणां मेषवृषभादयोराशयः श्लोकोक्तक्रमविशिष्टाः उच्चस्थानानीति स्वस्वतुंगापेक्षया सप्तमस्था स·३
५ नानि नीचानीति तत्रोच्चेष्वपि दशमादयो राशित्रिंशांशा यथाक्रममुच्चेषु परमनीचाइतिजातकश्लोकार्थः अत्रां
शस्त्रिंशोभागः यथाहनारदः त्रिंशद्भागात्मकंलग्नमिति सूर्यप्रत्यासत्तिर्ग्रहाणामस्तमयोनाम तदुक्तंलघु
जातके रविणास्तमयोयोगोवियोगस्तूदयोभवेदिति तेचस्वोच्चस्थाः फलंति नास्तगाः नापिनीचगाः तदु

अस्ूतपुत्रंसमये शचीसमात्रिसाधनाशक्तिरिवार्थमक्षयम् १३

क्तंराजमृगांके स्वोच्चेपूर्णंस्वर्क्षगेर्द्धं सुहृद्भे पादंहिद्विड्भेल्पंशुभःखेचरेंद्रः नीचस्थायीनास्तगोवानकिंचित्सादन्यू
नंखत्रिकोणेददातीति तदिदमाहकविः उच्चसंश्रयैरसूर्यगैरितिच एवंसतियस्यजन्मकालेपंचप्रभृतयोग्र-
हाः स्वोच्चस्थाः स देवतुल्योभवति तदुक्तंकूटस्थीये सुखिनःप्रकृष्टकार्याराजप्रतिरूपकाश्चराजानः एकद्वि ५
त्रिचतुर्भिर्जायंतेऽतः परंदिव्याइति तदिदमाहपंचभिरिति १३

दिशइति तत्क्षणंतस्मिन् क्षणे कालाध्वनोरत्यंतसंयोगे द्वितीया दिशःप्रसेदुः प्रसन्नाबभूवुः मरुतोवाताः स्र
खा मनोहराः ववुः अग्निःप्रदक्षिणार्चिःसन्हुतं हविरादददेस्वीचकार इत्यंसर्वंशुभशंसिशुभसूचकं बभूव
हियतः तादृशांरघुप्रकाराणांभवो जन्म लोकाभ्युदयायभवतीतिशेषः ततोदेवाअपिसंतुष्टाइत्यर्थः १४ अ
रिष्टेति अरिष्टेसूतिकागृहे शय्यां तल्पं अरिष्टंसूतिकागृहमित्यमरः परितःसर्वतः अभितःपरितःसमयानिक

दिशःप्रसेदुर्मरुतोववुःसुखाःप्रदक्षिणार्चिर्हुतमग्निराददे बभूवसर्वंशुभशंसितत्क्ष
णेभवोहिलोकाभ्युदयायतादृशाम् १४ अरिष्टशय्यांपरितोविसारिणासुजन्मनस्तस्य
निजेनतेजसा निशीथदीपाःसहसाहतत्विषोबभूवुरालेख्यसमर्पिताइव १५ ॥

षाहाप्रतियोगेपीतिद्वितीया विसारिणाविस्तरणशीलेन सुजन्मनःशोभनोत्पत्तेः जनुर्जननजन्मानिज
निरुत्पत्तिरुद्भवइत्यमरः तस्यशिशोर्निजेननैसर्गिकेण तेजसा सहसाहतत्विषः क्षीणकांतयः निशीथेदी-
पाःअर्द्धरात्रप्रदीपाः अर्द्धरात्रनिशीथौद्वावित्यमरः आलेख्येसमर्पिताःचित्रार्पिताइवबभूवुः निशीथश
ब्दोदीपानांप्रभाधिक्यसंभावनार्थः १५

जनायेति भूपतेर्दिलीपस्य अमृतसंमिताक्षरममृतसमानाक्षरं सरूपसमितसंमिताइत्याहदंडी कुमार
जन्म पुत्रोत्पत्तिं शंसतेकथयते शुद्धांतचराय अंतःपुरचारिणेजनाय त्रयमेवादेयमासीत् किंतत् शशि
प्रभंछत्रं उभेचामरेच छत्रादीनांराज्ञः प्रधानांगत्वादितिभावः १६ निवातेति निवातोनिर्वातदेशःनि
वातावाश्रयावाताविल्यमरः तत्र यत्पद्मं तद्वत्स्तिमितेन निश्चलेन चक्षुषानेत्रेण कांतंसुंदरं सुतानन

जनायशुद्धांतचरायशंसतेकुमारजन्मामृतसंमिताक्षरम् अदेयमासीत्त्रयमेवभूप
तेःशशिप्रभंछत्रमुभेचचामरे १६ निवातपद्मस्तिमितेनचक्षुषानृपस्यकांतंपिबतः
सुतानननम् महोदधेःपूरइवेंदुदर्शनाद्गुरुःप्रहर्षःप्रबभूवनात्मनि १७

पुत्रमुखंपिबतः तृष्णयापश्यतोनृपस्य गुरुरुत्कटः प्रहर्षःकर्ता इंदुदर्शनात् गुरुर्महोदधेःपूरोजलौघइव
आत्मनि शरीरे नप्रबभूव स्थातुं नशशाक अंतर्नमातिस्मेतियावत् नत्वल्पाधारेधिकमीयतइतिभावः यद्वा
हर्षआत्मनिस्वस्मिन्विषये नप्रबभूव आत्मानंनियंतुं नशशाक किंतु बहिर्निर्जगामेत्यर्थः १७ ७

सइति सदिलीपसूनुः तपस्विना पुरोधसा पुरोहितेन पुरोधास्तु पुरोहित इत्यमरः वसिष्ठेन तपस्वित्वात्तदनुष्ठितं कर्म सवीर्यस्यादितिभावः तपोवनादेत्यागत्य अखिले समग्रे जातकर्मणि जातस्य शिशोः कर्मणि कर्तव्यसंस्कार विशेषे कृते सति प्रयुक्तः संस्कारः शाणोल्लेखनादिर्यस्य स तथोक्तः आकरोद्भवः खनिप्रभवः खनिः स्त्रियामाकरः स्यादित्यमरः मणिरिवाधिकं बभौ वसिष्ठमंत्रप्रभावात्तेजिष्ठोऽभूदित्यर्थः अत्र मनुः प्राङ्नाभिवर्द्धनात्पुंसो जा

सजातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ १८ सुखश्रवा मंगलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् नकेवलं सद्मनि मागधीपतेः पथि व्यजृंभंत दिवौकसामपि १९

तकर्म विधीयत इति १८ सुखश्रवा इति सुखः सुखकरः श्रवः श्रवणं येषां ते सुखश्रवाः श्रुतिसुखा इत्यर्थः मंगलतूर्यनिस्वनाः मंगलवाद्यध्वनयः वारयोषितां वेश्यानां वारस्त्री गणिका वेश्या रूपाजीवेत्यमरः प्रमोदनृत्यै-र्हर्षनर्तनैः सह मागधीपतेः दिलीपस्य सद्मनि केवलं गृह एव न व्यजृंभंत नावर्द्धंत किंतु द्यौरोको येषां ते दिवौकसः पृषोदरादित्वात्साधुः देवास्तेषां पथ्याकाशेऽपि व्यजृंभंत तस्य देवांशत्वाद्देवोपकारित्वाच्च देवदुंदुभयोऽपि ने दुरिति भावः १९

रघु·टी·
७

नेति रक्षितुः सम्यक्पालनशीलस्य नृन्निति तृन्प्रत्ययः तस्य दिलीपस्य अत एव चोराद्यभावात्संयतो बद्धो न बभू
वनाभूत् किं तेनात आह विसर्जयेदिति सः तज्जन्मना हर्षितस्तोषितः सन् यं बद्धं विसर्जयेद्विमोचयेत् किंतु
सराजा तदा पितृणां ऋणाभिधानाद्बंधनात् केवलमेकं यथा तथा स्वयमेव एक एवेत्यर्थः केवलः कृत्स्न एकश्च
केवलश्चावधारण इति शाश्वतः मुमुचे कर्मकर्तरि लिट् स्वयमेव मुक्त इत्यर्थः अस्मिन्नर्थे एष वा अनृणो यः पुत्री

नसंयतस्तस्य बभूव रक्षितुर्विमोचयेद्यं सुतजन्महर्षितः ऋणाभिधानात्स्वयमेव केवलं तदा पितॄ
णां मुमुचे स बंधनात् २० श्रुतस्य यायादयमंतमर्भकस्तथा परेषां युधि चेति पार्थिवः अवेक्ष्य धातो
र्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् २१

ति श्रुतिः प्रमाणम् २० श्रुतस्येति अर्थविच्छब्दार्थ
ज्ञः पार्थिवः पृथिवीश्वरो दिलीपः अयमर्भको बालकः श्रुतस्य शास्त्रस्यांतं पारं यायात् तथा युधि परेषां शत्रूणां अं
तं पारं च यायात् शक्नुयादित्यर्थः शकि लिङ् चेति शक्यार्थे लिङ् इति हेतोर्धातोः अगि रगि लघि गत्यर्था इति लघि धातो
र्गमनाख्यमर्थं अवेक्ष्यालोच्य आत्मसंभवं पुत्रं नाम्ना रघुं चकार लघिवत्योर्नलोपश्चेत्युप्रत्यये पाल मूल लघु वल्ग
अंगुलीनां वलो रत्वमापद्यत इति वैकल्पिके रेफादेशे रघुरिति रूपसिद्धम् अत्र शंखः आशौचे तु व्यतिक्रांते नामकर्म वि
धीयत इति २१

स·३

७

पितुरिति सरघुः समग्रसंपदः पूर्णलक्ष्मीकस्य पितुर्दिलीपस्य प्रयत्नात् शुभ्रैर्मनोहरैः शरीरावयवैः हरिदश्वदीधितेः सूर्यस्यरश्मेः भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मय इत्यमरः अनुप्रवेशाद्बालचंद्रमा इव दिनेदिने प्रतिदिनं नित्यवीप्सयोरिति द्विर्वचनम् वृद्धिं पुपोष अत्र संहितावचनम् सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशं क्षपयंति दर्पणोदरनिहिता इव मंदिरस्यांतरिति २२ उमेति उमावृषांको पार्वती वृषध्वजो शरजन्मना कार्तिकेयेन

पितुः प्रयत्नात्ससमग्रसंपदः शुभ्रैः शरीरावयवैर्दिने दिने पुपोषवृद्धिंहरिदश्व
दीधितेरनुप्रवेशादिव बालचंद्रमाः २२ उमावृषांकौ शरजन्मना यथा यथा जयंतेन शचीपुरंदरौ तथा नृपः सा च सुतेन मागधी ननंदतुस्तत्सदृशेन तत्समौ २३

कार्तिकेयो महासेनः शरजन्मा षडानन इत्यमरः यथा ननंदतुः शचीपुरंदरौ इंद्राणीद्रौ पुलोमजा शचींद्राणीत्यमरः जयंतेन पाकशासनिना जयंतः पाकशासनिरित्यमरः यथा ननंदतुः तथा तत्समौ ताभ्यां उमावृषांकाभ्यां शचीपुरंदराभ्यां च समौ सा मागधी नृपश्च तत्सदृशेन ताभ्यां कुमारजयंताभ्यां सदृशेन सुतेन रघुणा ननंदतुः मागधी व्याख्याता २३

रथांगनाम्नोरिति रथांगनाम्नी च रथांगनामा च रथांगनामानौ चक्रवाकौ पुमान्स्त्रियेत्येकशेषः तयोरि
व तयोर्दंपत्योः भावबंधनं हृदयाकर्षकं परस्पराश्रयम् अन्योन्यविषयं यत्प्रेम बभूव तदेकेन केवलेन
ताभ्यामन्येन वा एके मुख्यान्यकेवला इत्यमरः एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा साधारणे समा

रथांगनाम्नोरिव भावबंधनं बभूव यत्प्रेम परस्पराश्रयं
विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि नव्यहीयत २४

नेत्ये संख्यायां च प्रयुज्यत इति विश्वः सुतेन विभक्तमपि कृतविभागमपि परस्परस्योपरि नव्यहीयत हीनं
न बभूव किंतु ववृधे कर्मकर्तरि लिङ् अकृत्रिमत्वात्स्वयमेवोपचितमित्यर्थः यदेकाधारं वस्तु तदाधारद्वये
विभज्यमानं हीयते अत्र तु तयोर्विषये प्रागेकविषयं प्रेम संप्रति द्वितीयविषयलाभेऽपि ना हीयत प्रत्युतोपचि
तमेवाभूदिति भावः २४

उवाचेति सोर्भकः शिशुः पोतः पाकोर्भकोडिंभः पृथुकः शावकः शिशुरित्यमरः धात्र्या उपमात्रा धात्रीजनन्यामलकी वसुमत्युपमातृष्विति विश्वः प्रथमसुदितमुपदिष्टं वच उवाच तदीयामंगुलिमवलंब्य ययौ च प्रणिपातस्य शिक्षया उपदेशेन नम्रोऽभूच्चेति यत् तेन पितुर्मुदं ततान २५ तमिति शरीरयोगजैः शरीरसंबंधेन जातैः सुखैः त्व-

उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलंब्य चांगुलिम् अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः २५ तमंकमारोप्य शरीरयोगजैः सुखैर्निषिंचंतमिवामृतं त्वचि उपांतसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ २६

चि त्वगिंद्रिये अमृतं निषिंचंतं वर्षंतमिव तं पुत्रमंकमारोप्य मुदाविर्भावात् उपांतयोः संमीलितलोचनः सन् नृपः चिरात् सुतस्पर्शरसज्ञतां ययौ रसः स्वादुः २६ ८ ६७

अमंस्तेति स्थितेरभेत्ता मर्यादा पालकः स नृपः परार्ध्यजन्मना उत्कृष्टजन्मना अनेन रघुणा अन्वयं वंशं प्रजा
नां पतिः ब्रह्मा गुणाः सत्वादयः गुणाः सत्वरजस्तामइत्यमरः तेषु अग्र्येण मुख्येन सत्वेन वर्तते व्याप्रियतइति
गुणाग्र्यवर्त्ती तेन स्वस्यमूर्त्तिभेदेन अवतारविशेषेण विष्णुना आत्मनः सर्गसृष्टिमिव स्थितिमंतं प्रति

अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमंतमन्वयम्
स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः २७

ष्ठावंतं अमंस्त मन्यते स्म मन्यते रनुदात्तत्वादिट् प्रतिषेधः अत्रोपमानोपमेययोरितरेतर विशेषणानीत
रेतरत्र योज्यानि तत्र रघुपक्षे गुणाः विद्याविनयादयः गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे स्तंभे सत्वा ९
दिसंध्यादिविद्यादिहरितादिषितिविश्वः शेषं स्फुगमम् २७ ७ ७ ७

सइति चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः प्रथमेब्दे तृतीये वा कर्तव्यं श्रुतिचोदनादिति मनुस्मरणात् तृतीये वर्षे कृतचूडः निष्पन्नचूडाकर्मा सन् डलयोरभेदः सरघुः प्राप्ते तु पंचमे वर्षे विद्यारंभं च कारये दिति वचनात् पंचमे वर्षे चल काकपक्षकैः चंचलशिखंडकैः बालानां तु शिखा प्रोक्ता काकपक्षः शिखंडक इति ह

सवृत्तचूडश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः लि
पेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् २८

लायुधः सवयोभिः स्निग्धैः स्निग्धो वयस्यः सवया इत्यमरः अमात्यपुत्रैरन्वितः सन् लिपेः पंचाशद्वर्णात्मिकाया मातृकायाः यथावद्ग्रहणेन सम्यग्बोधनोपायभूतेन वाङ्मयं शब्दजातं नद्यामुखं द्वारं मुखं तु वदनं मुख्यारंभे द्वाराभ्युपाययोरिति यादवः तेन कश्चिन्मकरादिः समुद्रमिव आविशत् प्रविष्टः ज्ञातवानित्यर्थः २८

अथेति गर्भाष्टमेब्दकुर्वीत ब्राह्मणस्योपनायनं गर्भा[...]ोराज्ञो गर्भाच्च [...]रशाविशइति मनुस्मरणात् अथगर्भैका
दशेब्दे विधिवदुपनीतं कृतोपवीतं गुरुप्रियमेनं रघुं विपश्चितो विद्वांसो गुरवो विनिन्युः शिक्षितवंतः तेषु गुरवः अ
स्मिन्नर्भके रघो अवंध्ययत्नाः सफलप्रयत्नाश्च बभूवुः तथाहि क्रियाशिक्षा क्रियातु निष्कृतौ शिक्षा चिकित्सोपायकर्म
स्वितियादवः वस्तुनि पात्रभूते उपहिता प्रयुक्ता प्रसीदति फलति क्रियाहिद्रव्यं विनयति नाद्रव्यमितिकौटिल्यः २९

अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् अवंध्ययत्नाश्च बभूवुरर्भके क्रियाहि
वस्तूपहिता प्रसीदति २९ धियः समग्रैः सगुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ततार विद्याः
पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ३० धियइति अत्र कामंदकः शुश्रूषाग्रहणंचैव श्रवणंधा
रणं तथा ऊहापोहोर्थविज्ञानं तत्त्वज्ञानंच धीगुणाइति आन्वीक्षिकी त्रयी वार्ता दंडनीतिश्चेशाश्वती एता विद्याश्च
तस्रस्तु लोकसंस्थितिहेतवइतिच उदारधीरुत्कृष्टबुद्धिः स रघुः समग्रैर्धीगुणैः चत्वारोर्णवा उपमा उपमानं यासां ताश्च-
तुरर्णवोपमाः तद्धितार्थेत्युत्तरपदसमाहारेचेत्युत्तरपदसमासः चतस्रो विद्याः [...]रितां दिशमीश्वरः सूर्यः पवनातिपाति- १०
भिर्हरिद्भिर्निजाश्वैः हरित्ककुभिवर्णेच तृणवाजिविशेषयोरितिविश्वः चतस्रो [...]शइव क्रमात्ततार चतुरर्णवोपमत्वं दिशा
मपिद्रष्टव्यम् ३०

त्वचमिति कार्ष्णरौरववास्तानिचर्माणिब्रह्मचारिणः वसीरन्नानुपूर्व्येणशाणक्षौमादिकानिवेतिमनुस्मरणात् सरघुः
मेध्यांशुद्धां रौरवीं रुरुसंबंधिनीं रुरुर्महाकृष्णसार इतियादवः त्वचंचर्म परिधायवसित्वा मंत्रवत्समंत्रकं अस्त्रं आ-
ग्नेयादिकं पितुरेवोपाध्यायादशिक्षत अभ्यस्तवान् आख्यातोपयोगइत्यपादानात्पंचमी पितुरेवेत्यवधारणमुपपाद
यति नेति नद्गुरे केवलः द्वितीयः पार्थिवः केवलंपृथिवीश्वरएव नाभूत् किंतु क्षितौ दिलीपएकधनुर्धरोप्यभूत ३१

त्वचंसमेध्यांपरिधायरौरवीमशिक्षतास्त्रंपितुरेवमंत्रवत् नकेवलंतद्गुरुरेकपा
र्थिवःक्षितावभूदेकधनुर्धरोऽपिसः ३१ महोक्षतांवत्सतरःस्पृशन्निवद्विपेंद्रभावं
कलभःश्रयन्निव रघुःक्रमाद्यौवनभिन्नशैशवःपुपोषगांभीर्यमनोहरंवपुः ३२

महोक्षतामिति रघुःक्रमाद्यौवनेनभिन्नशैशवो निरस्तशिशुभावःसन् महानुक्षामहोक्षो महावृषभः अचतुरे-
त्यादिसूत्रेणनिपातनादकारांतत्वम् तस्यभावस्तत्तातांस्पृशन् गच्छन् वत्सतरोदम्यइव दम्यवत्सतरौसमावित्यम
रः द्विपेंद्रभावंमहागजत्वंश्रयन्व्रजन्कलभः करिपोतइव गांभीर्येणाचापलेन मनोहरं वपुः पुपोष ३२

अथेति गोर्नादिग्बेबलीवर्दैकतुभेदर्षिभेदयोः स्त्रीतुस्याद्दिशिभारत्यांभूमौचसुरभावपि पुंस्त्रियोःस्वर्गवज्रांबुर-
श्मिदृग्बाणलोमस्वितिकेशवः गावोलोमादिकेशादीयंतेखंड्यंतेऽस्मिन्नितिव्युत्पत्त्यागोदानंनामब्राह्मणादीनांषोडशा
दिषुवर्षेषु कर्तव्यं केशांताख्यं कर्मोच्यते तदुक्तंमनुना केशांतःषोडशेवर्षेब्राह्मणस्यविधीयते राजन्यबंधोर्द्वाविंशेवै



अथास्य गोदानविधेरनंतरं विवाहदीक्षां निरवर्तयद्गुरुः
नरेंद्रकन्यास्तमवाप्यसत्पतिं तमोनुदं दक्षसुता इवाबभुः ३३

श्यस्यद्व्यधिकेततइति अथगुरुः पिता गुरूगीष्पतिपित्राद्याविवित्यमरः अस्यरघोर्गोदानविधेरनंतरं विवाहदीक्षां-
निरवर्तयत् कृतवानित्यर्थः अथनरेंद्रकन्यास्तंरघुं दक्षस्यसुताशेहिण्यादयस्तमोनुदंचंद्रमिव तमोनुदोऽग्निचं
द्रार्काइतिविश्वः सत्पतिमवाप्य आबभुः रघुरपितमोनुत् अत्रमनुः वेदानधीत्यवेदौवावेदंवापियथाक्रमम्- ११
अविप्लुतब्रह्मचर्योगृहस्थाश्रममाविशेदिति ३३ ५ ५ ५ ५ ५

संप्रतियौवराज्ययोग्यतामाह युवेति युवा तरुणः युगोनाम धुर्यस्कंधगतः सच्छिद्रप्रांतो यानांगभूतो दारुविशेषः याना
द्यंगे युगः पुंसि युगं युग्मे कृतादिषु इत्यमरः युगवद्व्यायतौ दीर्घौ बाहू यस्य सः अंसावस्य स्त इत्यंसलो बलवान् मांसलश्चेति वृ
त्तिकारः बलवान्मांसलोंऽसल इत्यमरः वत्सांसाभ्यां कामबले इति लच् प्रत्ययः कपाटवक्षाः अररोराः कपाटमररं तुल्ये इत्य
मरः परिणद्धकंधरो विशालग्रीवः अथ ग्रीवायां शिरोधिः कंधरेत्यपीत्यमरः परिणाहो विशालतेत्यमरः रघुः वपुषः प्रकर्षाद्

युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकंधरः वपुःप्रकर्षादजयद्गुरुं रघुस्तथापि नीचैर्विनयाद
दृश्यत ३४ ततः प्रजानां चिरमात्मना धृतां नितांतगुर्वीं लघयिष्यता धुरम् निसर्गसंस्कारविनीत इत्यसौ नृ
पेण चक्रे युवराजशब्दभाक् ३५ धिक्याद्यौवनकृतात् गुरुं पितरमजयत् तथापि विनयान्नम्रत्वेन नीचैरल्पको दृश्यत

अनौद्धत्यं च विवक्षितम् ३४ संप्रति तस्य यौवराज्यमाह तत इति ततः आत्मना स्वयं चिरं धृतां नितांतगुर्वीं वोतो गुणवचनादिति
ङीप् प्रजानां धुरं पालनप्रयासं लघयिष्यता लघु करिष्यता तत्करोति तदाचष्ट इति लघुशब्दाण्णिच् ततो लृटः सद्वेति शतृप्र
त्ययः नृपेण दिलीपेनासौ रघुः निसर्गेण स्वभावेन संस्कारेण शास्त्राभ्यासजनितवासनया च विनीतो नम्र इति हेतोर्युवराज इ
तिशब्दं भजतीति तथोक्तः भजो ण्विरिति ण्विप्रत्ययः चक्रे कृतः द्विविधो विनयः स्वाभाविकः कृत्रिमश्चेति कौटिल्यः तदुभय

संपन्नत्वात्सुतंयुवराजंचकारेत्यर्थः अत्रकामंदकः विनयोपग्रहान्भूत्यैकुर्वीतनृपतिःसुतान् अविनीतकुमारंहिकुलमाशुविशीर्यते विनीतमौरसंपुत्रंयौवराज्येभिषेचयेदिति ३५ नरेंद्रेति गुणान्विनयादीन्सौरभ्यादींश्चाभिलषतीतिगुणाभिलाषिणी श्रीः राज्यलक्ष्मीः पद्माश्रयाच नरेंद्रोदिलीपएवमूलायतनंप्रधानस्थानंतस्मादपादानादनंतरंसंनिहितं युवराजइतिसंज्ञास्यसंजाताद्युवराजसंज्ञितं तारकादित्वादितच्प्रत्ययः आत्मनःपदंस्थानमास्पदं आस्पदंप्रतिष्ठायामितिनिपातः स्वरघुरित्यास्पदंतदास्पदं क्रमशः अचिरोत्पन्नान्नवावतारमचिरोत्पन्नमुत्पलमिव अंशेनागच्छ

नरेंद्रमूलायतनादनंतरंतदास्पदंश्रीर्युवराजसंज्ञितम् अगच्छदंशेनगुणाभिलाषिणीनवावतारंकमलादिवोत्पलम् ३६ विभावसुःसारथिनेववायुनाघनव्यपायेनगभस्तिमानिव बभूवतेनातितरांसुदुःसहःकटप्रभेदेनकरीवपार्थिवः ३७

त् स्त्रियोहियूनिरज्यंतइतिभावः ३६ विभावसुरिति सारथिनासहायभूतेन एतद्विशेषणमुत्तरवाक्येष्वप्यनुषंजनीयम् वायुना विभावसुर्वन्हिरिव सूर्यवन्हीविभावसूइत्यमरः घनव्यपायेनसारथिनागभस्तिमान्सूर्यइव कटोगंडः गंडःकटोमदोदानमित्यमरः तस्यप्रभेदःस्फुटनंमदोदयइत्यर्थः तेनकरीवपार्थिवोदिलीपस्तेनरघुणा अतितरांसुदुःसहःअत्यंतंसुष्टु असह्योबभूव ३७

नियुज्येति शतक्रतुरिंद्रः उपमाउपमानंयस्यस शतक्रतूपमः सदिलीपः शतंवैतल्प्याराजपुत्रादेव्याआशापालाइत्यादिश्रुत्या रा
जसूतैरनुइतमनुगतं धनुर्धरं तंरघुं होमतुरंगाणांरक्षणेनियुज्य एकेनक्रतुना अपूर्णमेकोनंक्रतूनामश्वमेधानांशतं अपवि
घ्नमपगतविघ्नंयथातथाआप ३८ ततइति ततःपरमेकोनशतक्रतुप्राप्त्यनंतरं यज्वनाविधिनेष्टवता यज्वातुविधिनेष्टवानि
त्यमरः तेनदिलीपेनपुनरपिमखाय मखंकर्तुं क्रियार्थोपपदेत्यादिनाच्चतुर्थी उत्सृष्टंमुक्तं अनर्गलमप्रतिबंधं अव्याहतस्वै

नियुज्यतंहोमतुरंगरक्षणेधनुर्धरंराजसूतैरनुद्रुतं अपूर्णमेकेनशतक्रतूपमःशतंक्रतूनामपविघ्नमापसः ३८
ततःपरंतेनमखाययज्वनातुरगमुत्सृष्टमनर्गलंपुनः धनुर्भृतामग्रतएवरक्षताजहारशक्रःकिलगूढविग्रहः ३९
विषादलुप्तप्रतिपत्तिविस्मितंकुमारसैन्यंसपदिस्थितंचतत् वसिष्ठधेनुश्चयदृच्छयागताश्रुतप्रभावाददृशेथ
नंदिनी ४०
रगतमित्यर्थः अपर्यवर्तयंतोऽश्वमनुचरंतीत्यापस्तंबस्मरणात् तुरंगंधनुर्भृतांरक्षतांरक्षकाणामग्रतएव शक्रो
गूढविग्रहःसन्जहार किलकिलेत्यैतिह्ये ३९ विषादेति तत्कुमारस्यसैन्यंसेना सपदि विषाद इष्टनाशकृतोमनोभंगः तदुक्तम्
विषादश्चेतसोभंगउपायाभावनाशयोरिति तेनलुप्ताप्रतिपत्तिः कर्तव्यज्ञानंयस्यतत्तथोक्तं विस्मितमश्वनाशस्याकस्मिक-
त्वादाश्चर्याविष्टंसत् स्थितं तस्थौ अथश्रुतप्रभावा यदृच्छयास्वेच्छया आगता नंदिनीनामवसिष्ठधेनुश्चददृशे रघोःस्व

प्रसादलब्धत्वान्मदनुजिघृक्षयेतिभावः द्वौचकारावविलंबसूचकौ ४० तदिति सतांपुरस्कृतः पूजितोदिलीपनंदनो-
रघुः पुण्येन पवित्रेण तस्यानंदिन्यायदंगं तस्यनिष्यंदोद्भवः सएवजलं मूत्रमित्यर्थः तेनलोचनेप्रमृज्यशोधयित्वा-
अतींद्रियेषु इंद्रियाण्यतिक्रांतेषु अत्यादयः क्रांताद्यर्थेद्वितीययेतिसमासः द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषुप
रवल्लिंगताप्रतिषेधाद्विशेष्यनिघ्नत्वं भावेषुवस्तुषु उपपन्नदर्शनः संपन्नसाक्षात्कारशक्तिर्बभूव ४१सइति नरदेवसं
भवः सरघुः पुनःपुनःसूतेन सारथिना निषिद्धचापल्लं निवारितोद्धतं रथस्यरश्मिभिःप्रग्रहैः किरणप्रग्रहौरश्मीइत्य

तदंगनिष्यंदजलेन लोचने प्रमृज्यपुण्येनपुरस्कृतःसतां अतींद्रियेष्वप्युपपन्नदर्शनो बभूवभावेषुदिलीपनं
दनः ४१ सपूर्वतः पर्वतपक्षशातनंददर्शदेवं नरदेवसंभवः पुनःपुनःसूतनिषिद्धचापलंहरंतमश्वंरथरश्मि
संयतं ४२ शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिंविदित्वाहरिभिश्चवाजिभिः अवोचदेनंगगनस्पृशारघुःस्वरे
णधीरेणनिवर्तयन्निव ४३ मरः संयतंबद्धमश्वंहरंतं पर्वतपक्षाणांशातनंछेदकंदेवमिंद्रं पूर्वतः पूर्वस्यांदिशिददर्श ४२
शतैरिति रघुस्तमश्वहर्त्तारं अनिमेषवृत्तिभिर्निमेषव्यापारशून्यैरक्ष्णांशतैः हरिभिर्हरिद्वर्णैः हरिर्वाच्यवदाख्यातो १३
हरित्कपिलवर्णयोरितिविश्वः वाजिभिरश्वैश्च हरिमिंद्रंविदित्वाज्ञात्वा हरिर्वातार्कचंद्रेंद्रयमोपेंद्रमरीचिषितिविश्वः

एनमिदं गगनस्पृशाव्योमव्यापिना धीरेणगंभीरेण स्वरेणध्वनिनानिवर्तयन्निव अवोचत् ४३ मखेति हेदेवेंद्र म
नीषिभिस्त्वमेव मखांशभाजांयज्ञभागभुजांमध्येप्रथमः यतोनिगद्यसे कथ्यसे ततोपि अजस्रदीक्षायांनित्यदीक्षा
यांप्रयतस्यमद्गुरोः क्रियाविघाताय क्रतुविघाताय क्रियांविहंतुमित्यर्थः तुमर्थाच्चभाववचनादितिचतुर्थी कथंप्रव

मखांशभाजांप्रथमोमनीषिभिस्त्वमेवदेवेंद्रयतोनिगद्यसे अजस्रदीक्षाप्रयतस्यम
द्गुरोःक्रियाविघातायकथंप्रवर्तसे ४४ त्रिलोकनाथेनसतामखद्विषस्त्वयानियम्या
ननुदिव्यचक्षुषा सतेत्स्वयंकर्मसुधर्मचारिणांत्वमंतरायोभवसिच्युतोविधिः ४५

र्तसे ४५ त्रिलोकेति त्रयाणांलोकानांनाथस्त्रिलोकनाथः तद्धितार्थेत्यादिनाउत्तरपदसमासः तेनत्रैलोक्यनियाम-
केन दिव्यचक्षुषा अतींद्रियार्थदर्शिनात्वयामखद्विषः क्रतुविघातकाः नियम्याः ननुशिक्ष्याःखलु सतांधर्मचारिणां
सतांकर्मसु क्रतुषु स्वयमंतरायोविघ्नोभवसिचेत् तर्हिविधिरनुष्ठानंच्युतः क्षतः लोकेसत्कर्मकथैवास्तमियादित्य
र्थः ४५

तदिति हे मघवन् तत्तस्मात्कारणात् महाक्रतोरश्वमेधस्य अग्र्यंश्रेष्ठमंगंसाधनं अमुं तुरंगं प्रतिमोक्तुंप्रतिदातुमर्ह
सि तथाहि शश्वतेः पथोदर्शयितारः सन्मार्गदर्शकाईश्वरामहांतः मलीमसांमलिनानां पद्धतिंमार्गं नाददते नस्वीकु
र्वंते असन्मार्गंनावलंबंतइत्यर्थः मलीमसंतुमलिनंकच्चरंमलदूषितमित्यमरः ४६ इतीति इतिरघुणासमीरितंप्र
गल्भं वचोनिशम्य आकर्ण्य दिवौकसःस्वर्गौकसः दिवंस्वर्गेंतरिक्षेचेतिविश्वः तेषामधिपतिर्देवेंद्रः रघुप्रभावात्स

तदंगमग्र्यंमघवन्महाक्रतोरमुंतुरंगंप्रतिमोक्तुमर्हसि पथःशश्वतेर्दर्शयितारईश्वरामलीमसामाददतेन
पद्धतिम् ४६ इतिप्रगल्भंरघुणासमीरितंवचोनिशम्याधिपतिर्दिवौकसां निवर्तयामासरथंसविस्मयः
प्रचक्रमेचप्रतिवक्तुमुत्तरम् ४७ यदात्थराजन्यकुमारतत्तथायशस्तुरक्ष्यंपरतोयशोधनैः जगत्प्रकाशंत
दशेषमिज्ययाभवद्गुरुर्लंघयितुंममोद्यतः ४८ विस्मयःसन् रथंनिवर्तयामासउत्तरंप्रतिवक्तुंप्रचक्रमेच ४७ यदि
ति हे राजन्यकुमार क्षत्रियकुमार मूर्धाभिषिक्तोराजन्योबाहुजःक्षत्रियोविराडित्यमरः यद्वाक्यमात्थब्रवीषि ब्रुवःपंचा
नामित्यादिनाआहादेशः तत्तथासत्यं किंतुयशोधनैरस्मादृशैःपरतःशत्रुतः यशोरक्ष्यं ततःकिमतआह भवद्गुरुः
त्वत्पिता जगत्प्रकाशंलोकप्रसिद्धं अशेषंसर्वंममतद्यशः इज्ययायागेन लंघयितुं तिरस्कर्तुं उद्यतःउद्युक्तः ४८

किंतद्यशइत्याह हरिरिति पुरुषेषूत्तमइतिसप्तमीसमासः ननिर्धारणइतिषष्ठी समासनिषेधात्कर्मधारयेसत्यम्
त्परमोत्तमोत्कृष्टाः पूज्यमानैरित्युत्तमपुरुषइतिस्यात् यथाहरिर्विष्णुरेकएवपुरुषोत्तमःस्मृतः यथात्र्यंबकःशिवएवम
हेश्वरःस्मृतः नापरः अपरः पुमान्नतथा तथामांमुनयःशतक्रतुंविदुः विदंति विदोलटोवेतिणलादयः नोस्माकंहरिहर
योर्ममचेत्यर्थः एषत्रितयोपिशब्दोद्वितीयगामीनहि द्वितीयाप्रकरणेगम्यादीनामुपसंख्यानात्समासः ४९ अतइति य-

हरिर्यथैकःपुरुषोत्तमःस्मृतोमहेश्वरस्त्र्यंबकएवनापरः तथाविदुर्मांमुनयःशतक्रतुंद्वि
तीयगामीनहिशब्दएषनः ४९ अतोऽयमश्वःकपिलानुसारिणापितुस्त्वदीयस्यमया
पहारितः अलंप्रयत्नेनतवात्रमानिधाःपदंपदव्याःसगरस्यसंततेः ५०

तोहमेवशतक्रतुरतः
त्वदीयस्यपितुः अयंशततमोश्वः कपिलानुसारिणाकपिलमुनितुल्येनमया अपहारितः अपहृतः अपहारितइ
तिस्वार्थेणिच् तवात्रास्वेप्रयत्नेनालं प्रयत्नोमाकारीरित्यर्थः निषेधस्यनिषेधंप्रतिकरणत्वात्तृतीया सगरस्यरा
ज्ञः संततेः संतानस्यपदव्याःपदंमानिधाः मानिधेहि निपूर्वाद्दधातेर्लुङ् नमाङ्योगइतिअडागमप्रतिषेधः म
हदास्कंदनं ते विनाशमूलंभवेदितिभावः ५० ॥७॥ ॥७॥ ॥७॥ ॥७॥

ततइति ततस्तुरगस्यरक्षितारघुः प्रहस्यप्रहासंकृत्वा अपभयोनिर्भीकिः सन् पुनः पुरंदरं बभाषे किमिति हे दे
वेंद्र एषः अश्वमोचनरूपस्तेनवसर्गोनिश्चयोयदि सर्गःस्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिष्वित्यमरः तर्हि-
शस्त्रंगृहाण भवान्रघुं मामनिर्जित्य कृतीकृतकृत्योनखलु इष्टादिभ्यश्चेतीनिप्रत्ययः रघुग्रहणादात्मनोदुर्ज
यत्वंसूचयति ५१ सइति सरघुःउन्मुखःसन् मघवंतमिंद्रमेवमुक्त्वा शरासनंचापं सशरं करिष्यमाणः आलीढे



ततःप्रहस्यापभयःपुरंदरंपुनर्बभाषेतुरगस्यरक्षिता गृहाणशस्त्रंयदिसर्गएषतेन
खल्वनिर्जित्यरघुंकृतीभवान् ५१ सएवमुक्त्वामघवंतमुन्मुखःकरिष्यमाणःसश
रंशरासनम् अतिष्ठदालीढविशेषशोभिनावपुःप्रकर्षेणविडंबितेश्वरः ५२

न आलीढाख्येन स्थानभेदेन विशेषशोभिना अतिशयशोभिना वपुःप्रकर्षेणदेहोन्नत्येन विडंबितेश्वरोऽनुकृ
तपिनाकीसन् अतिष्ठत् आलीढलक्षणमाहयादवः स्थानानिधन्विनांपंचतत्रवैशाखमस्त्रियाम् त्रिवितस्त्यंत
रौपादौ मंडलंतोरणाकृति अन्वर्थस्यात्समपदमालीढंतुततोऽग्रतः दक्षिणंवाममाकुंच्यप्रत्यालीढंविपर्ययइति ५२ १५

तथापीति तथापिवज्रघातेपि शस्त्राणांव्यवहारेणव्यापारेण निष्ठुरे क्रूरे विपक्षभावे शात्रवे चिरंतस्थुषः-
स्थितवतोऽस्यरघोः वीर्यातिशयेनवृत्रंहतवानितिवृत्रहा ब्रह्मभ्रूणवृत्रेषुक्विप् तुतोष स्वयंवीर एव वीरंजा
नातीतिभावः कथंशत्रोःसंतोषोऽत आह हि यतः गुणैःसर्वत्र शत्रुमित्रोदासीनेषुपदमंघ्रिर्निधीयते गुणैःस

तथापिशस्त्रव्यवहारनिष्ठुरेविपक्षभावेचिरमस्थल स्थुषः तुतोषवीर्यातिशयेनवृत्र-
हापदंहिसर्वत्रगुणैर्निधीयते ६२ असह्यमद्रिद्विषपिसारवत्तयानमेत्वदन्येनविसोढ
मायुधम् अवेहिमांप्रीतमृतेतुरंगमात्कुरवृणीष्वेतितमाहवासवः ६३

र्वत्रसंक्रम्यतइत्यर्थः गुणाःशत्रूनप्यावर्जयंतीतिभावः ६२ असह्यमिति सारवत्तया दृढवत्तया अद्रिद्विषप्य
सह्यमप्रतिबंधं मे आयुधंवज्रं त्वदन्येननविसोढं अतोमां प्रीतंसंतुष्टमवेहि तुरंगमादृते तुरंगमंवर्जयित्वा
अन्यारादितरर्तेइत्यादिनापञ्चमी वरंवृणीष्वेति तं वासव आह तुरंगमादन्यददेयंनास्तीतिभावः ६३ ९ ॥

ततइति ततो नरेंद्रसूनुः रघुः निषंगात्तूणीरादसमग्रं यथातथोद्धृतं सुवर्णपुंखद्युतिभिः रंजिता अंगुल्यो येन तमिषुं
प्रतिसंहरन्निवर्तयन् नाप्रहरंतं प्रहरेदितिनिषेधादितिभावः प्रियंवदतीतिप्रियंवदः प्रियवशेवदः खजितिरव
च्प्रत्ययः अरुर्द्विषदित्यादिनामुमागमः सुरेश्वरंप्रत्यवदत् नतुप्राहरदितिभावः ६४ अमोच्यमिति हेप्रभो इंद्र अ
श्वममोच्यं मन्यसे यदि ततस्तर्हि अजस्रदीक्षायांसंततदीक्षायां प्रयतः सम द्गुरुर्ममपिता विधिनैवकर्मणि समाप्ते सति

ततोनिषंगादसमग्रमुद्धृतं सुवर्णपुंखद्युतिरंजितांगुलिं नरेंद्रसूनुः प्रतिसंहरन्निषुं प्रियंवदं प्रत्यवदत्सुरेश्वरं
६४ अमोच्यमश्वं यदिमन्यसे प्रभो ततः समाप्ते विधिनैव कर्मणि अजस्रदीक्षाप्रयतः स मद्गुरुः क्रतोरशेषेण फ
लेन युज्यतां ६५ यथाच वृत्तांतमिमं सदोगतस्त्रिलोचनैकांशतया दुरासदः तवैव संदेशहराद्विशांपतिः शृणो
ति देवेश तथा विधीयताम् ६६ क्रतोर्यज्ञस्य यत्फलं तेन फलेनाशेषेण कृत्स्नेन युज्यतां युक्तोस्तु अश्वमेधसमग्रफल-
लाभे किमश्वेनेति भावः ६५ यथेति सदोगतः सदोगृहंगतः त्रिलोचनस्येश्वरस्य एकांशतया अष्टानामन्यतममूर्त्तित्वा
त् दुरासदो माहृशैर्दुःप्रापो विशांपतिर्नृपतिः यथा इमं वृत्तांतं वार्ता वृत्तांतः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवातयोरि १८
त्यमरः तव संदेशहराद्वार्ताहरादेव शृणोति च हे देवेश इंद्र तथा विधीयताम् ६६ ७ ७

तथेति मातलिसारथिरिंद्रः रघोःसंबंधिनंकामंमनोरथं तथेति तथास्त्विति प्रतिशुश्रुवान् प्रतिश्रुतवान् भाषा
यांसदवसश्रुवइतिक्वसुप्रत्ययः यथागतंययौ सुदक्षिणासूनुरपि नातिप्रमनाः विजयलाभेऽप्यश्वनाशान्नातीव
तुष्टःसन् नञर्थस्यनशब्दस्यसुप्सुपेतिसमासः नृपस्यसदोगृहंप्रतिन्यवर्तत ६७ तमिति हरेरिंद्रस्यशास-

तथेतिकामंप्रतिशुश्रुवान्रघोर्यथागतंमातलिसारथिर्ययौ नृपस्यनातिप्रमनाःसदो
गृहंसुदक्षिणासूनुरपिन्यवर्तत ६७ तमभ्यनंदत्प्रथमंप्रबोधितःप्रजेश्वरःशासन
हारिणाहरेः परामृशन् हर्षजडेनपाणिनातदीयमंगंकुलिशव्रणांकितम् ६८

नहारिणापुरुषेणप्रथमंप्रबोधितोज्ञापितः वृत्तांतमितिशेषः प्रजेश्वरो दिलीपः हर्षजडेन हर्षशिशिरेणपा-
णिना कुलिशव्रणांकितं तस्यरघोरिदंतदीयंअंगंशरीरं परामृशन्स्पृशन् तंरघुमभ्यनंदत् ६८ ७

इतीति इतिहेतुप्रकरणप्रकारादिसमाप्तिष्वित्यमरः महनीयशासनः पूजनीयाज्ञः क्षितीशः इति महाक्रतूनामश्वमेधानां नवभिरधिकां नवतिं एकोनशतं आयुषः क्षयेसति दिवं स्वर्गमारुरुक्षुरारोढुमिच्छुः सोपानानां परंपराणां पंक्तिमिवततान ६९ अथेति अथविषयेभ्यो व्यावृत्तात्मा निवृत्तचित्तः सदिलीपो यथाविधियथाशास्त्रं यूनेसूनवे नृपतिककुदं राजचिन्हं ककुद्वत्ककुदंश्रेष्ठे वृषांकेराजलक्ष्मणीतिविश्वः सितातपवारणं श्वेतच्छत्रं दत्वा

इतिक्षितीशोनवतिंनवाधिकांमहाक्रतूनांमहनीयशासनः समारुरुक्षुर्दिवमायुषःक्षये ततानसोपानपरंपरामिव ६९ अथसविषयव्यावृत्तात्मायथाविधिसूनवेनृपतिककुदंदत्वा यूनेसितातपवारणं मुनिवनतरुच्छायांदेव्यातयासहशिश्रियेगलितवयसामिक्ष्वाकूणामिदंहिकुलव्रतम् ७०

तया देव्या सुदक्षिणया सह मुनिवनतरोः छायां शिश्रिये श्रितवान् वानप्रस्थाश्रमं स्वीकृतवानित्यर्थः तथाहि गलितवयसां वृद्धानामिक्ष्वाकूणामिक्ष्वाकोर्गोत्रापत्यानां तद्राजसंज्ञकत्वादणोलुक् इदं वनगमनं कुलव्रतंहि देव्यासह इत्यनेन सपत्नीकवानप्रस्थाश्रमउक्तः तथाच याज्ञवल्क्यः सुतेविन्यस्तपत्नीकस्तयावानुगतोवनम् वानप्रस्थोब्रह्मचारीसाग्निः सोपासनोव्रजेदिति हरिणीवृत्तमेतत् रसयुगहयैन्सौम्रौस्लौगोयदाहरिणी १९

तदेतिलक्षणात् ७० इतिश्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिता

इतिश्रीरघुवंशेमहाकाव्येकालिदासकृतौरघूत्पत्तिवर्णनोनामतृतीयःसर्गःसमाप्तः

यांरघुवंशव्याख्यायांसंजीविनीसमाख्यायांतृतीयःसर्गःसमाप्तः ५ बापुहरशेटदेवळेकरयांणीं आपले· छाप·छापिलें

 श्रीगणेशायनमः उपाधिगम्योप्यनुपाधिगम्यः समावलोक्योप्यसमावलोक्यः भवोपियोऽभूद भवः शिवोयंज 
 गत्यपायाद्दपिनःसपायात् १ राज्ञीगर्भमाधत्तेत्युक्तम् संप्रतिगर्भलक्षणानिवर्णयितुंप्रस्तौति अथेति अथगर्भ
धारणानंतरं सुदक्षिणा उपस्थितोदयं प्राप्तकालं भर्तुर्दिलीपस्यईप्सितंमनोरथं प्रावेक्तः पुनःसखीजनस्योद्वीक्ष
णानांदृष्टीनांकौमुदीसुखंचंद्रिकाप्रादुर्भावः यद्वा कौमुदीदीपोत्सवतिथिः तदुक्तंभविष्योत्तरे कौमोदंतेजनाय-
स्यांतेनासौकौमुदीमतेति तस्याप्तुखंप्रारंभः अतएवकेचित्कौमुदीसुखमितिपाठंपठंति इक्ष्वाकुकुलस्यसंततेर

अथेप्सितंभर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम् निदानमिक्ष्वाकुकुलस्यसंततेःसुद
क्षिणादोहदलक्षणंदधौ १

विच्छेदस्यनिदानंमूलकारणं निदानंत्वादिकारणमित्यमरः एवंविधंदोहदलक्ष
णं गर्भचिन्हंवक्ष्यमाणंदधौ स्वहृदयेनगर्भहृदयेनचद्विहृदयागर्भिणी यथाहवाग्भट्टः मातृजंह्यस्यहृदयं-
मातुश्चहृदयेनतत् संबद्धंतेनगर्भिण्यानेष्टंश्रद्धाविधारणमिति तत्संबंधित्वाद्गर्भोदौहृदमित्युच्यते सात्वत
द्योगाद्दौहृदिनीति तदुक्तंसंग्रहे द्विहृदयांनारीदोहृदिनीमाचक्षतइति अत्रदोहदलक्षणस्येप्सितत्वेन कौमु- १
दीसुखत्वेनचनिरूपणाद्रूपकालंकारः अस्मिन्सर्गेवंशस्थंवृत्तम् जतौतुवंशस्थमुदीरितंजरौ १ ७५

संप्रति क्षामतारव्यंगर्भलक्षणंवर्णयति शरीरेति शरीरस्यसादात् कार्श्यादसमग्रभूषणापरिमिताभरणा लोध्रपुष्प वत्पांडुनामुरवेनोपलक्षिता सास्रदक्षिणा विन्येयाभृग्यास्तारकायस्यांसा तथोक्ता विरलनक्षत्रेत्यर्थः तनुप्रकाशेना ल्पकांतिनाशशिनोपलक्षिता ईषदसमाप्तप्रभातातप्रभातकल्पा प्रभातादीषन्न्यूना तसिलादिषाकृत्वस्रचइतिप्रभा तशब्दस्यपुंवद्भावः शर्वरीरात्रिरिवालक्ष्यत शरीरसादादिगर्भलक्षणमाह वाग्भटः क्षामतागरिमाकुक्षेर्मूर्च्छाछ

:शरीरसादादसमग्रभूषणामुरवेनसालक्ष्यतलोध्रपांडुना तनुप्रकाशेनविन्येयतारकाप्रभात कल्पाशशिनेवशर्वरी २ तदाननंमृत्सुरभिक्षितीश्वरोरहस्युपाघ्रायनतृप्तिमाययौ करीव सिक्तंपृषतैःपयोमुचांशुचिव्यपायेवनराजिपल्वलम् ३ दिर्दरोन्वनम् जृंभाप्रसेकःसदनं रोमरा-

ज्याःप्रकाशनमिति२ तदिति क्षितीश्वरोरहसि मृदासुरभिसुगंधि तस्या आननंतदाननं सदक्षिणामुरवंउपाघ्रायतृ प्तिंनाययौ कःकथमिव शुचिव्यपायेग्रीष्मावसाने शुचिःशुद्धेनुपहतेशृंगाराषाढयोःसितेग्रीष्मे हुतवहेपिस्यादुपधौ शुद्धमंत्रिणीतिविश्वः पयोमुचांमेघानांपृषतैर्बिंदुभिः पृषंतिबिंदुपृषताइत्यमरः सिक्तमुक्षितंवनराज्याःपल्वल वेशंतःपल्वलंचाल्पसरइत्यमरःउपाघ्रायकरीगजइव अत्रकरिवनराजिपल्वलानां कांतकामिनीवदनसमाधि

रन्नुसंधेयः गर्भिणीनांमृद्भक्षणंलोकेप्रसिद्धमेव एतेनदोहदाख्यंगर्भलक्षणमुच्यते तदाननंसेवितमृत्तिकाल
वंनृपःसमाघ्रायेतिपाठे सेवितोमृत्तिकायाअंशोयेनतादृशंमुखमित्यर्थः ३ दोहदलक्षणेमृद्भक्षणेहेतुंतरमुत्प्रे-
क्षते दिवमिति हियस्माद्दिगंतविश्रांतरथश्चक्रवर्ती तस्याःसुतस्तत्सुतः मत्सुतइतिपाठः मरुत्वानिं

दिवंमरुत्वानिवभोक्ष्यतेमहींदिगंतविश्रांतरथोहितत्सुतः
अतोभिलाषेप्रथमंतथाविधेमनोबबंधान्यरसान्विलंघ्यसा ४

द्रः इंद्रोमरुत्वान्मघवेत्यमरः दिवंस्वर्गमिवमहींभोक्ष्यते भुजोऽनवनइत्यात्मनेपदम् अतःप्रथमंसासुदक्षिणा त-
स्याविधेभूविकारे मृद्रूपअभिलष्यतइत्यभिलाषोभोग्यवस्तु तस्मिन् कर्मणिघञ् प्रत्ययः रस्यंतेस्वाद्यंतइतिरसा
भोग्यार्थाः अन्येचतेरसाश्चतान् विलंघ्यविहायमनोबबंधनिदधौ दोहदहेतुकस्यमृद्भक्षणस्यपुत्रभूभोगसूचनार्थ-
त्वमुत्प्रेक्षितं४

नेति मगधस्यराज्ञोऽपत्यंस्त्रीमागधीसुदक्षिणा द्व्यञ्मगधकलिंगसूरमसादणित्यण् न्हियाकिंचित्किमपीप्सितमि
ष्टं मेमह्यं नशंसति नाचष्टे केषुवस्तुषु स्पृहावतीत्यनुवेलमनुक्षणमाहत्त आहृतवान् कर्तरिक्तः आहृतौसाद
रार्चिताविल्यमरः प्रियायाःसखीःसहचरीःउत्तरकोसलेश्वरोदिलीपः पृच्छतिस्म पप्रच्छ लट्स्मेइतिभूतार्थेलट्
सखीनांविश्रंभभूमिरित्यादितिभावः ५ उपेत्येति दोहदंगर्भिणीमनोरथः दोहदंदोहृदंश्रद्धालालसञ्चसमेस्मृतं

नमेन्हियाशंसतिकिंचिदीप्सितंस्पृहावतीवस्तुषुकेषुमागधी इतिस्मपृच्छत्यनुवेलमादृतःप्रि
यासखीरुत्तरकोसलेश्वरः ५ उपेत्यसादोहदटुःखशीलतायदेवववेतदपश्यदाहृतम् नहीष्ट
मस्यास्त्रिदिवेऽपिभूपतेरभूदनासाद्यमधिज्यधन्वनः ६ मितिहलायुधःसा सुदक्षिणा दोहदेन गर्भिणी
मनोरथेन दुःखशीलतांदुःखस्वभावतामुपेत्य प्राप्य यद्वस्तु ववेऽभ्याचकांक्ष तदाहृतमानीतम् भर्त्रेतिशेषःअप
श्यदेव अलभतेत्यर्थः कुतोहियस्मादस्याःसुदक्षिणायाइष्टंवस्तु त्रिदिवेपिस्वर्गेपिभूपतेरनासाद्यमनवाप्यंना
भूत् किं याञ्चयानेत्याह अधिज्यधन्वनइति नहिवीरपत्नीनामलभ्यंनामकिंचिदस्तीतिभावः अत्रवाग्भटः
पादशोफोविदाहोन्तेश्रद्धाश्चविविधात्मिकेति एतञ्च पत्नीमनोरथपूरणाकरणेदृष्टदोषसंभावान्नतुराज्ञःस्त्री

लोल्यात् तदुक्तम् देयमप्यहितंतस्यैहितोपहितमल्पकम् श्रद्धाविघातेगर्भस्यविकृतिश्च्युतिरेववा अन्यच्च
दोहदस्याप्रदानेनगर्भोदोषमवाप्नुयादिति ६ क्रमेणेति सासुदक्षिणा क्रमेणदोहदव्यथांचनिस्तीर्य प्रचीयमा
नावयवापुष्यमाणावयवासती पुराणपत्राणांमपगमान्नाशादनंतरं सन्नद्धाः संजाताः प्रत्यग्रत्वात् मनोज्ञाः

क्रमेणनिस्तीर्यचदोहदव्यथांप्रचीयमानावयवारराजसा पुराणपत्रापगमादनंतरंलतेवसन्न
द्धमनोज्ञपल्लवा ७ दिनेषुगच्छत्सुनितांतपीवरंतदीयमानीलमुखंस्तनद्वयम् तिरश्चकार
भ्रमरावलीढयोः सुजातयोः पंकजकोशयोः श्रियम् ८

पल्लवाः यस्याः सा लतेवरराज ७ लक्षणांत
रं वर्णयति दिनेष्विति दिनेषुदोहददिवसेषुगच्छत्सुसत्सु नितांतपीवरमतिस्थूलं आसमंतान्नीलेमुखेचू
चुकेयस्यतत् तदीयंस्तनद्वयम् भ्रमरैरवलीढयोरभिव्याप्तयोः सुजातयोः सुंदरयोः पंकजकोशयोः प ३
द्ममुकुलयोः श्रियंशोभांतिरश्चकार अत्रवाग्भटः अम्लेष्टतास्तनौपीनौसस्तन्यौकृष्णचूचुकाविति ८

निधानेति नृपः ससत्वां आपन्नसत्वांगर्भिणीमित्यर्थः आपन्नसत्वास्याद्गुर्विण्यंतर्वत्नीचगर्भिणीत्यमरः महिषीं निधा
नं निधिर्गर्भेयस्यास्तां सागरांबरांसमुद्रवसनां भूमिमित्यर्थः भूतधात्रीरत्नगर्भाविपुलासागरांबरेत्यमरः तामिव अभ्यं-
तरेलीनः पावकोयस्यास्तांशमीमिव शमीतरौवन्हिरस्तीत्यत्रलिंगं शमीगर्भादग्निंमंथतीति अंतःसलिलामंतर्गतजलां
सरस्वतीं नदीमिव अमन्यत एतेनगर्भस्यभाग्यवत्वतेजस्वित्वपावनत्वानिविवक्षितानि ९ प्रियेति धीरः सराजाप्रिया

निधानगर्भामिवसागरांबरांशमीमिवाभ्यंतरलीनपावकाम् नदीमिवांतःसलिलांसरस्वतीं
नृपः ससत्वांमहिषीममन्यत ९ प्रियानुरागस्यमनःसमुन्नतेर्भुजार्जितानांचदिगंतसंपदाम्
यथाक्रमंपुंसवनादिकाःक्रियाधृतेश्चधीरःसदृशीर्व्यधत्तसः १

यामनुरागस्यस्नेहस्यमनसःसमुन्नतेरोदार्य
स्यच भुजबलेनार्जितानां करेणवार्जितानांनतुवाणिज्यादिना दिगंतेषुसंपदां धृतेः पुत्रोमेभविष्यतीतिसंतोषस्यच धृ
तियोगांतरे धैर्येधारणारतितुष्टिष्विति विश्वः सदृशीरनुरूपाः पुमान्सूयतेऽनेनेतिपुंसवनं तदादिर्यासांताः क्रियाः
यथाक्रमंक्रममनतिक्रम्य व्यधत्तकृतवान् आदिशब्देन अनवलोभनसीमंतोन्नयनेगृह्येते अत्र मासिद्वितीयेवापुंसव
नं यदहः पुंसानक्षत्रेण चंद्रमायुक्तःस्यादितिपारस्करः चतुर्थेऽनवलोभनमित्याश्वलायनः षष्ठेष्टमेवासीमंतइतियाज्ञ
वल्क्यः १०

सुरेंद्रमात्रेति गृहागतोनृपः सुरेंद्राणांलोकपालानांमात्राभिरंशैराश्रितस्यानुप्रविष्टस्यगर्भस्यगौरवात् प्रयत्नेन
मुक्तासनया आसनादुत्थितयेत्यर्थः उपचारस्यांजलावंजलिकरणेरिवन्नहस्तया पारिप्लवनेत्रया तरलाक्ष्या चंच
लंतरलंचैवपारिप्लवपरिप्लवेइत्यमरः तयासुदक्षिणयाननंद सुरेंद्रमात्राश्रितेत्यत्रमनुः अष्टाभिश्चसुरेंद्राणां-
मात्राभिर्निर्मितोनृपइति ११ कुमारेति अथकुमारभृत्या बालचिकित्सा संज्ञायांसमजनिषदेत्यादिनाक्यप् तस्यां

सुरेंद्रमात्राश्रितगर्भगौरवात्प्रयत्नमुक्तासनयागृहागतः तयोपचारांजलिखिन्नहस्तयाननंद
पारिप्लवनेत्रयानृपः ११ कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथगर्भभर्मणि पतिः प्रतीतः प्र-
सवोन्मुखींप्रियांददर्शकालेदिवमभ्रितामिव १२ कुशलैः कृतिभिः कृतीकुशलइत्यपीत्यमरः आप्तैर्हितैर्भि
षग्भिर्वैद्यैः भिषग्वैद्यौचिकित्सकावित्यमरः गर्भस्य भर्मणि पोषणे भर्महेमभृतिर्भर्मइतिशाश्वतः भृञोमनिन्प्र
त्ययः अनुष्ठितेकृतेसति कालेदशमेमासि अन्यत्रग्रीष्मावसानेप्रसवस्यगर्भमोचनस्योन्मुखीं आसन्नप्रसवामित्यर्थः
स्यादुत्पादेफलेपुष्पेप्रसवोगर्भमोचनइत्यमरः प्रियांभार्यां अभ्राण्यस्याःसंजातानिअभ्रिता तदस्यसंजातं तार
कादिभ्यइतजितीतच्प्रत्ययः तांदिवमिव पतिर्भर्ता प्रतीतोहृष्टःसन् ख्यातेहृष्टेप्रतीतइत्यमरः ददर्श दृष्टवान्

गर्भवेश्मनीतिपाठे ऽनुष्ठितइत्यत्राधिष्ठितइतिज्ञेयम् गर्भभर्मणीतिपाठेगर्भाधानप्रतीतावौचित्यभंगः १२
ग्रहैरिति ततः शच्याइंद्राण्या समा पुलोमजाशचींद्राणीत्यमरः सा स्फुदक्षिणा समये प्रसूतिकाले सति द
शमे मासीत्यर्थः दशमे मासिजायतेइतिश्रुतेः उच्चसंश्रयैरुच्चसंस्थैस्तुंगस्थानगैः असूर्यगैरनस्तमितैः कैश्चि
द्यथासंभवं पंचभिर्ग्रहैः सूचिताभाग्यसंपद्यस्य तं पुत्रं त्रीणि प्रभाव मंत्रोत्साहात्मकानि साधनान्युत्पादकानि यस्याः

ग्रहैस्ततः पंचभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसंपदम्

सा त्रिसाधना शक्तिः शक्तयस्तिस्रः प्रभावोत्साहमंत्रजा इत्यमरः अक्षयमर्थमिव असूत षूङ् प्राणिगर्भविमोच
न इत्यदादिष्वुपठ्यते तस्माद्धातोः कर्तरि लङ् अत्रेदमनुसंधेयम् अजवृषभमृगांगनाकुलीरा झषवणिजौ
च दिवाकरादितुंगाः दशशिखिमनुयुक्तिथींद्रियांशैस्त्रिनवकविंशतिभिश्चते ऽस्तनीचा इति सूर्यादी

रघु०टी० नांसप्तानांग्रहाणां मेषवृषभादयोराशयः श्लोकोक्तक्रमविशिष्टाः उच्चस्थानानीति स्वस्वतुंगापेक्षया सप्तमस्था स०३
५ नानि नीचानीति तत्रोच्चेष्वपि दशमादयो राशित्रिंशांशा यथाक्रममुच्चेषु परमनीचाइतिजातकश्लोकार्थः अत्रां
शस्त्रिंशोभागः यथाहनारदः त्रिंशद्भागात्मकंलग्नमिति सूर्यप्रत्यासत्तिर्ग्रहाणामस्तमयोनाम तदुक्तंलघु
जातके रविणास्तमयोयोगोवियोगस्तूदयोभवेदिति तेचस्वोच्चस्थाः फलंति नास्तगाः नापिनीचगाः तदु

असूतपुत्रंसमये शचीसमात्रिसाधनाशक्तिरिवार्थमक्षयम् १३

क्तंराजमृगांके स्वोच्चेपूर्णस्वर्क्षगेर्द्धं सुहृद्भे पादंद्विड्भे लवंशत्रुभः खेचरेंद्रः नीचस्थायीनास्तगोवानकिंचित्सादन्यू
नंस्वत्रिकोणेददातीति तदिदमाहकविः उच्चसंश्रयैरसूर्यगैरितिच एवंसतियस्यजन्मकाले पंचप्रभृतयोग्र-
हाः स्वोच्चस्थाः सदेवतुल्योभवति तदुक्तंकूटस्थीये स्फुरिवनः प्रकृष्टकार्याराजप्रतिरूपकाश्चराजानः एकद्वि ५
त्रिचतुर्भिर्जायंतेऽतः परंदिव्याइति तदिदमाहपंचभिरिति १३ ७ ५ ७

दिशइति तत्क्षणंतस्मिन्क्षणे कालाध्वनोरत्यंतसंयोगे द्वितीया दिशःप्रसेदुः प्रसन्नाबभूवुः मरुतोवाताः स्र
खा मनोहराः ववुः अग्निः प्रदक्षिणार्चिःसन्हुतं हविरादद्दे स्वीचकार इत्थंसर्वंशंप्रशंसि शंप्रसूचकं बभूव
हि यतः तादृशां रघुप्रकाराणां भवो जन्म लोकाभ्युदयाय भवतीतिशेषः ततोदेवाअपिसंतुष्टाइत्यर्थः १४ अ
रिष्टेति अरिष्टेसूतिकागृहे शय्यां तल्पं अरिष्टंसूतिकागृहमित्यमरः परितःसर्वतः अभितःपरितःसमयानिक

दिशःप्रसेदुर्मरुतोववुःस्रखाःप्रदक्षिणार्चिर्हुतमग्निरादद्दे बभूवसर्वंशंप्रशंसितत्क्ष
णेभवोहिलोकाभ्युदयायतादृशाम् १४ अरिष्टशय्यांपरितोविसारिणासुजन्मनस्तस्य
निजेनतेजसा निशीथदीपाःसहसाहतत्विषोबभूवुरालेख्यसमर्पिताइव १५ ॥

षाहाप्रतियोगेपीतिद्वितीया विसारिणाविस्तरणशीलेन सुजन्मनःशोभनोत्पत्तेः जनुर्जननजन्मानिज
निरुत्पत्तिरुद्भवइत्यमरः तस्यशिशोर्निजेननैसर्गिकेणतेजसा सहसाहतत्विषः क्षीणकांतयः निशीथेदी-
पाःअर्द्धरात्रप्रदीपाः अर्द्धरात्रनिशीथौद्वावित्यमरः आलेख्येसमर्पिताःचित्रार्पिताइवबभूवुः निशीथश
ब्दोदीपानांप्रभाधिक्यसंभावनार्थः १५ ५ ८ ७ ८

जनायेति भूपतेर्दिलीपस्य अमृतसंमिताक्षरममृतसमानाक्षरं सरूपसमितसंमिताइत्याहदंडी कुमार
जन्म पुत्रोत्पत्तिं शंसतेकथयते शुद्धांतचराय अंतःपुरचारिणेजनाय त्रयमेवादेयमासीत् किंतत् शशि
प्रभंछत्रं उभेचामरेच छत्रादीनांराज्ञः प्रधानांगत्वादितिभावः १६ निवातेति निवातोनिर्वातदेशः नि
वातावाश्रयावाताविषमरः तत्र यत्पद्मं तद्वत् स्तिमितेन निश्चलेन चक्षुषानेत्रेण कांतंसुंदरं सुतानन

जनायशुद्धांतचरायशंसतेकुमारजन्मामृतसंमिताक्षरम् अदेयमासीत्त्रयमेवभूप
तेःशशिप्रभंछत्रमुभेचचामरे १६ निवातपद्मस्तिमितेनचक्षुषानृपस्यकांतंपिबतः
सुताननम् महोदधेःपूरइवेंदुदर्शनात्गुरुःप्रहर्षःप्रबभूवनात्मनि १७

पद्मसुरवंपिबतः तृष्णयापश्यतोनृपस्य गुरुरुत्कटः प्रहर्षःकर्ता इंदुदर्शनात् गुरुर्महोदधेःपूरोजलौघइव
आत्मनि शरीरे नप्रबभूव स्थातुं नशशाक अंतर्नमातिस्मेतियावत् नत्वल्पाधारेधिकंमीयनइतिभावःयद्वा ६
हर्षआत्मनिस्वस्मिन्विषये नप्रबभूव आत्मानंनियंतुं नशशाक किंतु बहिर्निर्जगामेत्यर्थः १७ ७

सइति सदिलीपसूनुः तपस्विना पुरोधसा पुरोहितेन पुरोधास्तु पुरोहित इत्यमरः वसिष्ठेन तपस्वित्वात्तदनुष्ठितं कर्म सवीर्यस्यादितिभावः तपोवनादेत्यागत्य अखिले समग्रे जातकर्मणि जातस्य शिशोः कर्मणि कर्तव्यसंस्कार विशेषे कृते सति प्रयुक्तः संस्कारः शाणोल्लेखनादिर्यस्य स तथोक्तः आकरोद्भवः खनिप्रभवः खनिः स्त्रियामाकरः स्यादित्यमरः मणिरिवाधिकं बभौ वसिष्ठमंत्रप्रभावात्तेजिष्ठोऽभूदित्यर्थः अत्र मनुः प्राङ्नाभिवर्द्धनात्पुंसोजा

सजातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते दिलीपसूनुर्मणिराकरोद्भवः
प्रयुक्तसंस्कार इवाधिकं बभौ १८ सुखश्रवा मंगलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वार
योषिताम् नकेवलं सद्मनि मागधीपतेः पथिव्यजृंभंत दिवौकसामपि १९

नकर्मविधीयतइति १८ सुखश्रवाइति सुखः सुखकरः श्रवः श्रवणं येषां ते सुखश्रवाः श्रुतिसुखाइत्यर्थः मंग लतूर्यनिस्वनाः मंगलवाद्यध्वनयः वारयोषितां वेश्यानां वारस्त्री गणिका वेश्या रूपाजीवेत्यमरः प्रमोदनृत्यैः हर्षनर्तनैः सह मागधीपतेः दिलीपस्य सद्मनि केवलं गृह एव न व्यजृंभंत नावर्द्धंत किंतु द्यौरोको येषां ते दिवौ कसः पृषोदरादित्वात्साधुः देवास्तेषां पथ्याकाशेपि व्यजृंभंत तस्य देवांशत्वाद्देवोपकारित्वाच्च देवदुंदुभयोपि नेदुरिति भावः १९

नेति रक्षितुः सम्यक्पालनशीलस्य तृन्निति तृन्प्रत्ययः तस्य दिलीपस्य अत एव चोराद्यभावात्संयतो बद्धो न बभू
वनाभूत् किं तेनात आह विसर्जयेदिति स तज्जन्मना हर्षितस्तोषितः सन् यं बद्धं विसर्जयेद्विमोचयेत् किंतु
स राजा तदा पितॄणां ऋणाभिधानाद्बंधनात् केवलमेकं यथा तथा स्वयमेव एक एवेत्यर्थः केवलः कृत्स्न एकश्च
केवलश्चावधारण इति शाश्वतः मुमुचे कर्मकर्तरि लिट् स्वयमेव मुक्त इत्यर्थः अस्मिन्नर्थे एष वा अनृणो यः पुत्री

न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ऋणाभिधानात्स्वयमेव केवलं तदा पितॄ
णां मुमुचे सबंधनात् २० स तस्य याथादयमंतमर्भकस्तथा परेषां युधि चेति पार्थिवः अवेक्ष्य धातो
र्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् २१

ति श्रुतिः प्रमाणम् २० श्रुतस्येति अर्थविच्छब्दार्थ
ज्ञः पार्थिवः पृथिवीश्वरो दिलीपः अयमर्भको बालकः श्रुतस्य शास्त्रस्यांतं पारं यायात् तथा युधि परेषां शत्रूणां अं
तं पारं च यायात् शक्नुयादित्यर्थः शकि लिङ् चेति शक्यार्थे लिङ् इति हेतोर्धातोः अगि रगि लघि गत्यर्था इति लघिधातो
र्गमनाख्यमर्थं अवेक्ष्यालोच्य आत्मसंभवं पुत्रं नाम्ना रघुं चकार लघिवत्योर्नलोपश्चेत्युप्रत्यये पाल मूल लघुवल्गु
गुलीनां वलोरत्वमापद्यत इति वैकल्पिके रेफादेशे रघुरिति रूपं सिद्धम् अत्र शंखः आशौचे तु व्यतिक्रांते नामकर्म वि
धीयत इति २१ ७

पितुरिति सरघुः समग्रसंपदः पूर्णलक्ष्मीकस्य पितुर्दिलीपस्य प्रयत्नात् शुभैर्मनोहरैः शरीरावयवैः हरिदश्वदीधितेः सूर्य स्यरश्मेः भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मय इत्यमरः अनुप्रवेशाद्बालचंद्रमा इव दिनेदिने प्रतिदिनं नित्यवीप्सयोरिति द्विर्वचनम् वृद्धिं पुपोष अत्र संहितावचनम् सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशं क्षपयंति दर्पणोदरे निहिता इव मंदिरस्यांतरिति २२ उमेति उमावृषांकौ पार्वती वृषध्वजौ शरजन्मना कार्तिकेयेन

पितुः प्रयत्नात्स समग्रसंपदः शुभैः शरीरावयवैर्दिने दिने पुपोष वृद्धिं हरिदश्व
दीधितेरनुप्रवेशादिव बालचंद्रमाः २२ उमावृषांकौ शरजन्मना यथा यथा ज-
यंतेन शचीपुरंदरौ तथा नृपः सा च सुतेन मागधी ननंदतुस्तत्सदृशेन तत्समौ २३

कार्तिकेयो महासेनः शरजन्मा षडानन इत्यमरः यथा ननंदतुः शचीपुरंदरौ इंद्राणींद्रौ पुलोमजा शचींद्राणीत्यमरः जयंतेन पाकशासनिना जयंतः पाकशासनिरित्यमरः यथा ननंदतुः तथा तत्समौ ताभ्यां उमावृषांकाभ्यां शचीपुरंदराभ्यां च समौ सा मागधी नृपश्च तत्सदृशेन ताभ्यां कुमारजयंताभ्यां सदृशेन सुतेन रघुणा ननंदतुः मागधी व्याख्याता २३

रथांगनाम्नोरिति रथांगनाम्नीच रथांगनामाच रथांगनामानौ चक्रवाकौ पुमान्स्त्रियेत्येकशेषः तयोरि
व तयोर्दंपत्योः भावबंधनं हृदयाकर्षकं परस्पराश्रयम् अन्योन्यविषयं यत्प्रेम बभूव तदेकेन केवलेन
ताभ्यामन्येनवा एकेमुख्यान्यकेवलाइत्यमरः एकोऽन्यार्थेप्रधानेच प्रथमेकेवलेतथा साधारणेसमा

रथांगनाम्नोरिव भाव बंधनं बभूव यत्प्रेम परस्पराश्रयं
विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि नव्यहीयत २४

नेत्ये संख्यायांच प्रयुज्यत इति विश्वः सुतेन विभक्तमपि कृतविभागमपि परस्परस्योपरि नव्यहीयत हीनं
नबभूव किंतु ववृधे कर्मकर्तरि लिट् अकृत्रिमत्वात्स्वयमेवोपचितमित्यर्थः यदेकाधारं वस्तु तदाधारद्वये
विभज्यमानं हीयते अत्रतु तयोर्विषये प्रागेकविषयं प्रेम संप्रति द्वितीयविषयलाभेपि नाहीयत प्रत्युतोपचि
तमेवाभूदिति भावः २४

उवाचेति सोर्भकः शिशुः पोतः पाकोर्भकोडिंभः पृथुकः शावकः शिशुरित्यमरः धात्र्या उपमात्रा धात्रीजनन्यामलकी वसुमत्युपमातृष्विति विश्वः प्रथममुदितमुपदिष्टं वचः उवाच तदीयामंगुलिमवलंब्य ययौ च प्रणिपातस्य शिक्षया उपदेशेन नम्रोऽभूच्चेतियत् तेन पितुर्मुदं ततान २५ तमिति शरीरयोगजैः शरीरसंबंधेनजातैः सुखैः त्व-

उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलंब्य चांगुलिम् अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः २५ तमंकमारोप्य शरीरयोगजैः सुखैर्निषिंचंतमिवामृतं त्वचि उपांतसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ २६

त्वगिंद्रिये अमृतं निषिंचंतं वर्षंतमिव तं पुत्रमंकमारोप्य मुदाविर्भावात् उपांतयोः संमीलितलोचनः सन् नृपः चिरात्सुतस्पर्शरसज्ञतां ययौ रसः स्वादुः २६ ५ ६

अमंस्तेति स्थितेरभेत्ता मर्यादापालकः सनृपः परार्ध्यजन्मना उत्कृष्टजन्मना अनेन रघुणा अन्वयं वंशं प्रजा
नां पतिः ब्रह्मा गुणाः सत्वादयः गुणाः सत्वंरजस्तम इत्यमरः तेषु अग्र्येण मुख्येन सत्वेन वर्तते व्याप्रियतइति
गुणाग्र्यवर्त्ती तेन स्वस्यमूर्त्तिभेदेन अवतारविशेषेण विष्णुना आत्मनः सर्गसृष्टिमिव स्थितिमंतं प्रति

अमंस्तचानेनपरार्ध्यजन्मनास्थितेरभेत्तास्थितिमंतमन्वयम्
स्वमूर्तिभेदेनगुणाग्र्यवर्तिना पतिः प्रजानामिवसर्गमात्मनः २७

ष्ठावंतं अमंस्तमन्यतेस्म मन्यतेरनुदात्तत्वादिट्प्रतिषेधः अत्रोपमानोपमेययोरितरेतरविशेषणानीत
रेतरत्रयोज्यानि तत्ररघुपक्षे गुणाः विद्याविनयादयः गुणोऽप्रधानेरूपादौमौर्व्यांसूदेवृकोदरे स्तंभेसत्वा ९
दिसंध्यादिविद्यादिहरितादिष्वितिविश्वः शेषंसुगमम् २७ ५ ५ ५

सइति चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः प्रथमेब्दे तृतीये वा कर्तव्यं श्रुतिचोदनादिति मनुस्मरणात् तृतीये वर्षे कृतचूडः निष्पन्नचूडाकर्मा सन् डलयोरभेदः सरघुः प्राप्ते तु पंचमे वर्षे विद्यारंभं च कारयेदिति वचनात्पंचमे वर्षे चलकाकपक्षकैश्चंचलशिखंडकैः बालानां तु शिखा प्रोक्ता काकपक्षः शिखंडक इति है

सवृत्तचूडश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः लि
पेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् २८

लायुधः सवयोभिः स्निग्धैः स्निग्धो वयस्यः सवया इत्यमरः अमात्यपुत्रैरन्वितः सन् लिपेः पंचाशद्वर्णात्मिकाया मातृकायाः यथावद्ग्रहणेन सम्यग्बोधनोपायभूतेन वाङ्मयं शब्दजातं नद्यामुखं द्वारं मुखं तु वदनं मुख्यारंभे द्वाराभ्युपाययोरिति यादवः तेन कश्चिन्मकरादिः समुद्रमिव आविशत् प्रविष्टः ज्ञातवानित्यर्थः २८

अथेति गर्भाष्टमेब्दकुर्वीतब्राह्मणस्योपनायनं गर्भादेकादशेराज्ञोगर्भात्तुद्वादशेविशइतिमनुस्मरणात् अथगर्भैकादशेब्दे विधिवदुपनीतं कृतोपवीतं गुरुप्रियमेनंरघुं विपश्चितोविद्वांसोगुरवोविनिन्युः शिक्षितवंतः तेगुरवः अस्मिन्नर्भकेरघौ अवंध्ययत्नाः सफलप्रयत्नाश्चबभूवुः तथाहि क्रियाशिक्षा क्रियातुनिष्कृतौशिक्षाचिकित्सोपायकर्मस्वितियादवः वस्तुनि पात्रभूते उपहिताप्रयुक्ता प्रसीदतिफलति क्रियाहिद्रव्यं विनयति नोद्रव्यमितिकौटिल्यः २९

अथोपनीतंविधिवद्विपश्चितो विनिन्युरेनंगुरवोगुरुप्रियम् अवंध्ययत्नाश्चबभूवुरर्भकेक्रियाहि
वस्तूपहिताप्रसीदति २९ धियःसमग्रैःसगुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ततारविद्याः
पवनातिपातिभिर्दिशोहरिद्भिर्हरितामिवेश्वरः ३० धियइति अत्रकामंदकः शुश्रूषाग्रहणंचैवश्रवणंधारणंतथा ऊहापोहोर्थविज्ञानं तत्वज्ञानंचधीगुणाइति आन्वीक्षिकीत्रयीवार्तादंडनीतिश्चशाश्वती एताविद्याश्चतस्रस्तुलोकसंस्थितिहेतवइतिच उदारधीरुत्कृष्टबुद्धिः सरघुः समग्रैर्धियोगुणैः चत्वारोर्णवाउपमाउपमानंयासांताश्चतुरर्णवोपमाः तद्धितार्थेत्तिरपदसमाहारेचेत्युत्तरपदसमासः चतस्रोविद्याः हरितांदिशमीश्वरः सूर्यः पवनातिपातिभिर्हरिद्भिर्निजाश्वैः हरित्ककुभिवर्णेचतृणवाजिविशेषयोरितिविश्वः चतस्रोदिशइवक्रमात् ततार चतुरर्णवोपमत्वं दिशामपिद्रष्टव्यम् ३०

१०

त्वचमिति कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः वसीरन्नानुपूर्व्येण शाणक्षौमादिकानि वेति मनुस्मरणात् सरघु-
मेध्यां शुद्धां रौरवीं रुरुसंबंधिनीं रुरुर्महाकृष्णसार इति यादवः त्वचं चर्म परिधाय वसित्वा मंत्रवत् समंत्रकं अस्त्रं आ-
ग्नेयादिकं पितुरेवोपाध्यायादशिक्षत अभ्यस्तवान् आख्यातोपयोग इत्यपादानात्पंचमी पितुरेवेत्यवधारणमुपपाद
यति नेति तद्गुरेकोऽद्वितीयः पार्थिवः केवलं पृथिवीश्वर एव नाभूत् किंतु क्षितौ दिलीप एकधनुर्धरोऽप्यभूत् ३१

त्वचं समेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मंत्रवत् न केवलं तद्गुरुरेकपा
र्थिवः क्षिताव भूदेकधनुर्धरोऽपि सः ३१ महोक्षतां वत्सतरः स्पृशन्निव द्विपेंद्र भाव
कलभः श्रयन्निव रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गांभीर्य मनोहरं वपुः ३२

महोक्षतामिति रघुः क्रमाद्यौवनेन भिन्नशैशवो निरस्तशिशुभावः सन् महानुक्षा महोक्षो महावृषभः अचतुरे-
त्यादिसूत्रेण निपातनादकारांतत्वम् तस्य भावस्तत्ता तां स्पृशन् गच्छन् वत्सतरो दम्य इव दम्यवत्सतरो समावित्यम
रः द्विपेंद्रभावं महागजत्वं श्रयन्व्रजन् कलभः करिपोत इव गांभीर्येणाचापलेन मनोहरं वपुः पुपोष ३२

अथेति गोर्नादित्येबलीवर्द्दक्रतुभेदर्षिभेदयोः स्त्रीतुस्याद्दिशिभारत्यांभूमौचसुरभावपि पुंस्त्रियोःस्वर्गवज्रांबुर-
श्मिदृग्बाणलोमस्विति केशवः गावोलोमादिकेशादीयंते खंड्यंतेऽस्मिन्निति व्युत्पत्यागोदानंनाम ब्राह्मणादीनांषोडशा
दिषुवर्षेषु कर्तव्यं केशांताख्यं कर्मोच्यते तदुक्तंमनुना केशांतः षोडशेवर्षेब्राह्मणस्यविधीयते राजन्यबंधोर्द्वाविंशेवै

अथास्यगोदानविधेरनंतरंविवाहदीक्षांनिरवर्तयद्गुरुः
नरेंद्रकन्यास्तमवाप्यसत्पतिंतमोनुदंदक्षसुताइवाबभुः ३३

श्यस्यद्व्यधिकेततइति अथगुरुः पिता गुरूगीष्पतिपित्राद्याविल्यमरः अस्यरघोर्गोदानविधेरनंतरं विवाहदीक्षां-
निरवर्तयत् कृतवानित्यर्थः अथनरेंद्रकन्यास्तंरघुं दक्षस्यसुताशेहिण्यादयस्तमोनुदंचंद्रमिव तमोनुदोऽग्निचं
द्रार्काइतिविश्वः सत्पतिमवाप्य आबभुः रघुरपितमोनुत् अत्रमनुः वेदानधीत्यवेदौवावेदंवापियथाक्रमम्- ११
अविप्लुतब्रह्मचर्योगृहस्थाश्रममाविशेदिति ३३ ५ ५ ५ ५ ५

संप्रतियौवराज्ययोग्यतामाह युवेति युवातरुणः युगोनामधुर्यस्कंधगतः सच्छिद्रप्रांतोयानांगभूतोदारुविशेषः याना
यंगेयुगः पुंसियुगंयुग्मेकृतादिषिवित्यमरः युगवद्व्यायतौदीर्घौबाहूयस्यसः अंसावस्यस्तइत्यंसलोबलवान् मांसलश्चेतिवृ
त्तिकारः बलवान्मांसलोंऽसलइत्यमरः वत्सांसाभ्यांकामबलेइतिलच्प्रत्ययः कपाटवक्षाः अररोराः कपाटमररंतुल्येइत्य
मरः परिणद्धकंधरोविशालग्रीवः अथग्रीवायांशिरोधिःकंधरेत्यपीत्यमरः परिणाहोविशालतेत्यमरः रघुः वपुषःप्रकर्षाद्

युवायुगव्यायतबाहुरंसलःकपाटवक्षाःपरिणद्धकंधरः वपुःप्रकर्षादजयद्गुरुंरघुस्तथापिनीचैर्विनयाद्
दृश्यत ३४ ततःप्रजानांचिरमात्मनाधृतांनितांतगुर्वीलघयिष्यताधुरम् निसर्गसंस्कारविनीतइत्यसौनृ
पेणचक्रेयुवराजशब्दभाक् ३५ धिक्याद्यौवनकृतात् गुरुंपितरमजयत् तथापिविनयान्नम्रत्वेननीचैरल्पकोदृश्यत
अनेोद्धत्यंचविवक्षितम् ३४ संप्रतितस्ययौवराज्यमाह ततइति ततआत्मनास्वयंचिरंधृतांनितांतगुर्वीं वोतोगुणवचनादिति
ङीप् प्रजानांधुरंपालनप्रयासं लघयिष्यताःलघुकरिष्यता तत्करोति तदाचष्टइतिलघुशब्दाण्णिच् ततोलृटःसद्वेतिशतृप्र
त्ययः नृपेणदिलीपेनासौरघुः निसर्गेणस्वभावेनसंस्कारेणशास्त्राभ्यासजनितवासनयाचविनीतोनम्रइतिहेतोर्युवराजइ
तिशब्दंभजतीतितथोक्तः भजोण्विरितिण्विप्रत्ययः चक्रेकृतः द्विविधोविनयःस्वाभाविकःकृत्रिमश्चेतिकौटिल्यः तदुभय

संपन्नत्वात्सुतं युवराजं चकारेत्यर्थः अत्र कामंदकः विनयोपग्रहान्भूत्यै कुर्वीत नृपतिः सुतान् अविनीतकुमारं हि कुलमाशु विशीर्यते विनीतमौरसं पुत्रं यौवराज्येभिषेचयेदिति ३५ नरेंद्रेति गुणान् विनयादीन् सौरभ्यादींश्चाभिलषतीति गुणाभिलाषिणी श्रीः राज्यलक्ष्मीः पद्माश्रया च नरेंद्रो दिलीप एव मूलायतनं प्रधानस्थानं तस्मादपादानादनंतरं सन्निहितं युवराज इति संज्ञास्य संजाता युवराजसंज्ञितं तारकादित्वादितच्प्रत्ययः आत्मनः पदं स्थानमास्पदं आस्पदं प्रतिष्ठायामिति निपातः स रघुरित्यास्पदं तदास्पदं कमलात् चिरोत्पन्नात् नवावतारमचिरोत्पन्नमुत्पलमिव अंशेनागच्छ

नरेंद्रमूलायतनादनंतरं तदास्पदं श्रीर्युवराजसंज्ञितम् अगच्छदंशेन गुणाभिला
षिणी नवावतारं कमलादिवोत्पलम् ३६ विभावसुः सारथिनेव वायुना घनव्यपायेन ग
भस्तिमानिव बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ३७

त् स्त्रियो हि यूनि रज्यंत इति भावः ३६ विभावसुरिति सारथिना सहायभूतेन एतद्विशेषणमुत्तरवाक्येष्वप्यनुषंजनीयम् वायुना विभावसुर्वह्निरिव सूर्यवह्नी विभावसू इत्यमरः घनव्यपायेन सारथिना गभस्तिमान्सूर्य इव कटो गंडः गंडः कटो मदो दानमित्यमरः तस्य प्रभेदः स्फुटनं मदोदय इत्यर्थः तेन करीव पार्थिवो दिलीपस्तेन रघुणा अतितरां सुदुःसहः अत्यंतं सुष्टु असह्यो बभूव ३७ १२

नियुज्येति शतक्रतुरिंद्रः उपमाउपमानंयस्यस शतक्रतूपमः सदिलीपः शतंवैतन्व्याराजपुत्रादेवाआशापालाइत्यादिश्रुत्या रा
जसूतैरनुद्रुतमनुगतं धनुर्धरं तंरघुं होमतुरंगाणांरक्षणेनियुज्य एकेनक्रतुना अपूर्णमेकोनंक्रतूनामश्वमेधानांशतंअपवि
घ्नमपगतविघ्नंयथातथाआप ३८ ततइति ततःपरमेकोनशतक्रतुप्राप्त्यनंतरं यज्वनाविधिनेष्टवता यज्वातुविधिनेष्टवानि
त्यमरः तेनदिलीपेनपुनरपिमखाय मखंकर्तुं क्रियार्थोपपदेत्यादिनाचतुर्थी उत्सृष्टंमुक्तं अनर्गलमप्रतिबंधं अव्याहतस्वै

नियुज्यतंहोमतुरंगरक्षणे धनुर्धरंराजसुतैरनुद्रुतं अपूर्णमेकेनशतक्रतूपमः शतंक्रतूनामपविघ्नमापसः ३८
ततःपरंतेनमखाययज्वना तुरंगमुत्सृष्टमनर्गलंपुनः धनुर्भृतामग्रतएवरक्षतांजहारशक्रःकिलगूढविग्रहः ३९
विषादलुप्तप्रतिपत्तिविस्मितंकुमारसैन्यंसपदिस्थितंचतत् वसिष्ठधेनुश्चयदृच्छयागताश्रुतप्रभावाददृशेथ
नंदिनी ४०

रगतमित्यर्थः अपर्यावर्तयंतो ऽश्वमनुचरंतीत्यापस्तंबस्मरणात् तुरंगं धनुर्भृतांरक्षतांरक्षकाणामग्रतएव शक्रो
गूढविग्रहःसन्जहार किलकिलेत्यैतिह्ये ३९ विषादेति ततकुमारस्यसैन्यंसेना सपदि विषाद इष्टनाशकृतोमनोभंगः तदुक्तम्
विषादश्चेतसोभंगउपायाभावनाशयोरिति तेनलुप्ताप्रतिपत्तिः कर्तव्यज्ञानंयस्यतत्तथोक्तं विस्मितमश्वनाशस्याकस्मिक-
त्वादाश्चर्याविष्टंसत् स्थितंतस्थौ अथश्रुतप्रभावा यदृच्छयास्वेच्छया आगता नंदिनीनामवसिष्ठधेनुश्चददृशे रघोःस्व

प्रसादलब्धत्वात्तदनुजिघृक्षयेतिभावः ह्रौत्तकारावविलंबसूत्रकौ ४० तदिति सतांपुरस्कृतः पूजितोदिलीपनंदनो- 
रघुः पुण्येन पवित्रेण तस्यानंदिन्यायदंगं तस्यनिष्यंदोद्रवः सएवजलं मूत्रमित्यर्थः तेनलोचनेप्रमृज्यशोधयित्वा-
अतींद्रियेषु इंद्रियाण्यतिक्रांतेषु अत्यादयः क्रांताद्यर्थेद्वितीययेतिसमासः द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषुप
रवल्लिंगताप्रतिषेधाद्विशेष्यनिघ्नत्वं भावेषुवस्तुषु उपपन्नदर्शनः संपन्नसाक्षात्कारशक्तिर्बभूव ४१सइति नरदेवसं
भवः सरघुः पुनःपुनःसूतेन सारथिना निषिद्धचापलं निवारितोद्धत्यं रथस्यरश्मिभिःप्रग्रहैः किरणप्रग्रहोरश्मीइत्य

तदंगनिष्यंदजलेनलोचनेप्रमृज्यपुण्येनपुरस्कृतःसतां अतींद्रियेष्वप्युपपन्नदर्शनोबभूवभावेषुदिलीपनं
दनः ४१ सपूर्वतःपर्वतपक्षशातनंददर्शदेवंनरदेवसंभवः पुनःपुनःसूतनिषिद्धचापलंहरंतमश्वंरथरश्मि
संयतं ४२ शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिंविदित्वाहरिभिश्चवाजिभिः अवोचदेनंगगनस्पृशारघुःस्वरे
णधीरेणनिवर्तयन्निव ४३ मरःसंयतंबद्धमश्वंहरंतं पर्वतपक्षाणांशातनंच्छेदकंदेवमिंद्रंपूर्वतःपूर्वस्यांदिशिददर्श ४२
शतैरिति रघुस्तमश्वहर्त्तारं अनिमेषवृत्तिभिर्निमेषव्यापारशून्यैरक्ष्णांशतैः हरिभिर्हरिद्वर्णैः हरिर्वाच्यवदाख्यातो 
हरित्कपिलवर्णयोरितिविश्वः वाजिभिरश्वैश्च हरिमिंद्रंविदित्वाज्ञात्वा हरिर्वतार्कचंद्रेंद्रयमोपेंद्रमरीचिष्वितिविश्वः

एनमिंद्रं गगनस्पृशाव्योमव्यापिना धीरेणगंभीरेण स्वरेणाध्वनिनानिवर्तयन्निव अवोचत् ४३ मखेति हेदेवेंद्र म
नीषिभिस्त्वमेव मखांशभाजांयज्ञभागभुजांमध्येप्रथमः यतोनिगद्यसे कथ्यसे ततोपि अजस्रदीक्षायांनित्यदीक्षा
यांप्रयतस्यमद्गुरोः क्रियाविघाताय क्रतुविघाताय क्रियांविहंतुमित्यर्थः तुमर्थाच्चभाववचनादितिचतुर्थी कथंप्रव

मखांशभाजांप्रथमोमनीषिभिस्त्वमेवदेवेंद्रयतोनिगद्यसे अजस्रदीक्षाप्रयतस्यम
द्गुरोःक्रियाविघातायकथंप्रवर्तसे ४४ त्रिलोकनाथेनसतांमखद्विषस्त्वयानियम्या
ननुदिव्यचक्षुषा सचेत्स्वयंकर्मसुधर्मचारिणांत्वमंतरायोभवसिच्युतोविधिः ४५

र्तसे ४४ त्रिलोकेति त्रयाणांलोकानांनाथस्त्रिलोकनाथः तद्धितार्थेत्यादिनाउत्तरपदसमासः तेनत्रैलोक्यनियामन्
केन दिव्यचक्षुषा अतींद्रियार्थदर्शिनात्वयामखद्विषः क्रतुविघातकाः नियम्याः ननु शिक्ष्याःखलु सतां धर्मचारिणां
सतां कर्मसु क्रतुषु स्वयमंतरायोविघ्नोभवसिचेत् तर्हिविधिरनुष्ठानंच्युतःक्षतः लोकेसत्कर्मकथैवास्तमियादित्य
र्थः ४५

तदिति हेमघवन् तत्तस्मात्कारणात् महाक्रतोरश्वमेधस्य अग्र्यंश्रेष्ठमंगंसाधनं अमुं तुरंगं प्रतिमोक्तुंप्रतिदातुमर्ह
सि तथाहि शश्वत्‌ पथोदर्शयितारः सन्मार्गदर्शकाईश्वरामहांतः मलीमसांमलिनानां पद्धतिंमार्गं नाददते नस्वीकु
र्वते असन्मार्गेनावलंबंतइत्यर्थः मलीमसंतुमलिनंकच्चरंमलदूषितमित्यमरः ४६ इतीति इतिरघुणासमीरितंप्र
गल्भंवचोनिशम्य आकर्ण्यदिवौकसःस्वर्गौकसः दिवंस्वर्गेंतरिक्षेचेतिविश्वः तेषामधिपतिर्देवेंद्रः रघुप्रभावात्स

तदंगमग्र्यंमघवन्महाक्रतोरमुंतुरंगंप्रतिमोक्तुमर्हसि पथःश्रुतेर्दर्शयितारईश्वरामलीमसामाददतेन
पद्धतिम् ४६ इतिप्रगल्भंरघुणासमीरितंवचोनिशम्याधिपतिर्दिवौकसां निवर्तयामासरथंसविस्मयः
प्रचक्रमेचप्रतिवक्तुमुत्तरम् ४७ यदात्थराजन्यकुमारतत्तथायशस्तुरक्ष्यंपरतोयशोधनैः जगत्प्रकाशंत
मशेषमिज्ययाभवद्गुरुर्लंघयितुंममोद्यतः ४८ विस्मयःसन्रथंनिवर्तयामासउत्तरंप्रतिवक्तुंप्रचक्रमेच ४७ यदि
ति हेराजन्यकुमार क्षत्रियकुमार मूर्धाभिषिक्तोराजन्योबाहुजःक्षत्रियोविराडित्यमरः यद्वाक्यमात्थब्रवीषि ब्रुवःपंचा
नामित्यादिनाआहादेशः तत्तथासत्यं किंतुयशोधनैरस्मादृशैःपरतःशत्रुतः यशोरक्ष्यं ततःकिमतआह भवद्गुरुः
त्वत्पिता जगत्प्रकाशंलोकप्रसिद्धं अशेषंसर्वंममतद्यशः इज्ययायागेन लंघयितुं तिरस्कर्तुं उद्यतःउद्युक्तः ४८

किंतद्यशइत्याह हरिरिति पुरुषेषूत्तमइतिसप्तमीसमासः ननिर्धारणइतिषष्ठी समासनिषेधात्कर्मधारयेसन्महत्तरमोत्तमोत्कृष्टः पूज्यमानैरित्युत्तमपुरुषइतिस्यात् यथाहरिर्विष्णुरेकएवपुरुषोत्तमःस्मृतः यथात्र्यंबकःशिवएवमहेश्वरःस्मृतः नापरःअपरः पुमान्नतथा तथामांमुनयःशतक्रतुंविदुः विदंति विदोलटोवेतिणल्वादयः नोस्माकंहरिहरयोर्ममचेत्यर्थः एषत्रितयोपिशब्दोद्वितीयगामीनहि द्वितीयाप्रकरणेगम्यादीनामुपसंख्यानात्समासः ४९ अतइति य-

हरिर्यथैकःपुरुषोत्तमःस्मृतोमहेश्वरस्त्र्यंबकएवनापरः तथाविदुर्मांमुनयःशतक्रतुंद्वितीयगामीनहिशब्दएषनः ४९ अतोऽयमश्वःकपिलानुसारिणापितुस्त्वदीयस्यमयापहारितः अलंप्रयत्नेनतवात्रमानिधाःपदंपदव्याःसगरस्यसंततेः ५०

तोहमेवशतक्रतुरतः

त्वदीयस्यपितुः अयंशततमोश्वः कपिलानुसारिणाकपिलमुनितुल्येनमया अपहारितः अपहृतः अपहारितइतिस्वार्थेणिच् तवात्रास्मिन्प्रयत्नेनालं प्रयत्नोमाकारीरित्यर्थः निषेधस्यनिषेधंप्रतिकरणत्वात्तृतीया सगरस्यराज्ञः संततेः संतानस्यपदव्याःपदंमानिधाः मानिधेहि निपूर्वाद्धातेर्लुङ् नमाङ्योगइतिअडागमप्रतिषेधः महदास्कंदनं ते विनाशमूलंभवेदितिभावः ५०

ततइति ततस्तुरगस्यरक्षितारघुः प्रहस्यप्रहासंकृत्वा अपभयोनिर्भीकः सन् पुनः पुरंदरंबभाषे किमिति हेदे
वेंद्र एषः अश्वमोचनरूपस्तेतवसर्गोनिश्चयोयदि सर्गःस्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिष्वित्यमरः तर्हि—
शस्त्रंगृहाण भवान्रघुंमामनिर्जित्य कृतीकृतकृत्योनखलु इष्टादिभ्यश्चेतीनिप्रत्ययः रघुग्रहणादात्मनोदुर्ज
यत्वंसूचयति ५१ सइति सरघुःउन्मुखःसन् मघवंतमिंद्रमेवमुक्त्वा शरासनंचापं सशरं करिष्यमाणः आलीढे

ततःप्रहस्यापभयःपुरंदरंपुनर्बभाषेतुरगस्यरक्षिता गृहाणशस्त्रंयदिसर्गएषतेन
खल्वनिर्जित्यरघुंकृतीभवान् ५१ सएवमुक्त्वामघवंतमुन्मुखःकरिष्यमाणःसश
रंशरासनम् अतिष्ठदालीढविशेषशोभिनावपुःप्रकर्षेणविडंबितेश्वरः ५२

न आलीढाख्येनस्थानभेदेनविशेषशोभिना अतिशयशोभिना वपुःप्रकर्षेणदेहोन्नत्येन विडंबितेश्वरोऽनुकृ
तपिनाकीसन् अतिष्ठत् आलीढलक्षणमाहयादवः स्थानानिधन्विनांपंचतत्रवैशाखमस्त्रियाम् त्रिवितस्त्यंत
रौपादौ मंडलंतोरणाकृति अन्वर्थंस्यात्समपदमालीढंतुततोऽग्रतः दक्षिणंवाममाकुंच्यप्रत्यालीढंविपर्ययइति ५२ १५

रघोरिति रघोः अवष्टंभमयेन स्तंभरूपेण अवष्टंभः स्तवर्णेत्विस्तंभप्रारंभयोरितिविश्वः पत्रिणा बाणेन हृदये क्षतो विद्धः अतएवामर्षणः असहनः क्रुद्धइत्यर्थः गोत्रभिदपींद्रोपि संभावनीये चौरेपिगोत्रः क्षोणीधरेमतङ्ग इतिविश्वः नवांबुदानामनीकस्यमुहूर्तंक्षणमात्रंलांछने चिन्हभूते धनुषिदिव्येधनुषीत्यर्थः अमोघमवंध्यंसायकं

रघोरवष्टंभमयेनपत्रिणाहृदिक्षतोगोत्रभिदप्यमर्षणः नवांबुदानीकमुहूर्तलांछ नेधनुष्यमोघंसमधत्तसायकम् ५३ दिलीपसूनोःसबृहद्भुजांतरंप्रविश्यभीमासुर शोणितोचितः पपावनास्वादितपूर्वमाशुगःकुतूहलेनेव मनुष्यशोणितम् ५४

बाणं समधत्त संहितवान् ५३ दिलीपेति भीमानांभयंकराणां असुराणां शोणितेरुधिरे उचितः परिचितः सइंद्र मुक्त आशुगः सायकः दिलीपसूनोः रघोः बृहद्विशालंभुजांतरं वक्षः प्रविश्य अनास्वादितपूर्वंपूर्वमनास्वादितं सहसुपेतिसमासः मनुष्यशोणितं कुतूहलेनेवपपौ ५४

हरेरिति कुमारस्य विक्रमइवविक्रमोयस्यसतथोक्तः कुमारोपि रघुरपि सुरद्विपस्यैरावतस्यास्फालनेन कर्कशा अंगुलयोयस्यसतस्मिन् शच्याः पत्रविशेषकैरंकितेशचीपत्रविशेषकांकिते हरेरिंद्रस्यभुजे स्वनामचिन्हं स्वनामांकितं निचखाननिखातवान् यमानिलेंद्रचंद्रार्कविष्णुसिंहांशुवाजिषु शुकाहिकपिभेकेषु हरिर्नाकपिले

हरेः कुमारोपिकुमारविक्रमः सुरद्विपास्फालनकर्कशांगुलौ भुजेशचीपत्रविशेषकांकितेस्वनामचिन्हंनिचखानसायकम् ५५ जहारचान्येनमयूरपत्रिणाशरेणशक्रस्य महाशनिध्वजम् चुकोपतस्मैसभृशंसुरश्रियः प्रसह्यकेशव्यपरोपणादिव ५६

त्रिषित्यमरः निष्कंटराज्यमत्तस्याऽयंमहानभिभवइतिभावः ५५ जहारेति अन्येनमयूरपत्रिणामयूरपत्रवताशरेण शक्रस्येंद्रस्यमहाशनिध्वजं महांतमशनिरूपंध्वजंजहारचिच्छेद सशक्रः सुरश्रियः प्रसह्यबलात्कृत्य केशानां व्यपरोपणादवतारणाच्छेदनादिव तस्मैरघवे भृशमत्यर्थंचुकोप तंहंतुमियेषेत्यर्थः क्रुधद्रुहेत्यादिनासंप्रदानात्व तुर्थी ५६

तयोरिति जयैषिणोः अन्योन्यजयकांक्षिणो स्तयोरिंद्ररघ्वोः गरुत्मंतः पक्षवंतः गरुत्पक्षच्छदाः पत्रमित्यमरः आशिषिदं ष्ट्रायांविषंयेषांतेआशीविषाः सर्पाः पृषोदरादित्वात्साधुः आशीरुरगदंष्ट्रायामितिशब्दस्त्वः तइवभीमदर्शनाः सपक्षाः सर्पा इव द्रष्टृणांभयावहाइत्यर्थः तैरधोमुखैरूर्ध्वमुखैश्च धन्विनोरुपर्यधोदेशावस्थितत्वादितिभावः पत्रिभिर्बाणैः उपांते स्थितास्तटस्थाः सिद्धादेवाः इंद्रस्यरघोश्चसैनिकायस्मिन् तत्तथोक्तं तुमुलंसंकुलंयुद्धं बभूव ५७ अतीति वासवः

तयोरुपांतस्थितसिद्धसैनिकंगरुत्मदाशीविषभीमदर्शनैः बभूवयुद्धंतुमुलंजयैषिणो रधोमुखैरूर्ध्वमुखैश्चपत्रिभिः ५७ अतिप्रबंधप्रहितास्त्रवृष्टिभिस्तमाश्रयंदुःप्रस हस्यतेजसः शशाकनिर्वापयितुंनवासवःस्वतश्च्युतंवन्हिमिवाद्भिरंबुदः ५८

अतिप्रबंधेनातिसातत्येन प्रहिताभिः प्रयुक्ताभिः अस्त्रवृष्टिभिः दुःप्रसहस्यदुःखेनप्रसह्यतेइति दुःप्रसहंतस्य दुः खेनाप्रसहस्येत्यर्थः तेजसःप्रतापस्य आश्रयंतं रघुं अंबुदोऽद्भिः स्वतश्च्युतंनिसर्गगतंवन्हिमिव निर्वापयितुं नि वारयितुं नशशाक रघोरपि लोकपालात्मकस्येंद्रांशसंभवत्वादितिभावः ५८ ७ ७

ततइति ततोरघुः हरिचंदनांकिते प्रकोष्ठेमणिबंधे प्रमथ्यमानार्णवधीरनादिनीं प्रमथ्यमानार्णवइव धीरंगंभी
रंनदतीतितां तथोक्तां वेवेष्टिव्याप्नो तीतिबिडंव्यापकमोजोयस्यतस्य बिडौजसइंद्रस्य पृषोदरादित्वात्साधुः शरा
सनज्यां धनुर्मौर्वीं शशांकस्यार्द्धःखडइव मुखंफलंयस्य तेनपत्रिणा अलुनादच्छिनत् ५९सइति विरूढमत्सरःप्र
वृद्धवैरः सइंद्रः चापमुत्सृज्य प्रबलस्यविद्विषःशत्रोः प्राणनाशायवधाय महींधारयंतीतिमहीध्राः पर्वताः मूलविभु-

ततःप्रकोष्ठेहरिचंदनांकितेप्रमथ्यमानार्णवधीरनादिनीं रघुःशशांकार्द्धमुखेनपत्रिणाशरासनज्याम
लुनाद्बिडौजसः ५९सचापमुत्सृज्यविरूढमत्सरःप्रणाशनायप्रबलस्यविद्विषः महीध्रपक्षव्यपरोपणोचि
तंस्फुरत्प्रभामंडलमस्त्रमाददे ६०रघुर्भृशंवक्षसितेनताडितःपपातभूमौसहसैनिकाश्रुभिः निमेषमात्रा
दवधूयतद्व्यथांसहोत्थितःसैनिकहर्षनिस्वनैः ६१

जादित्वात्कप्रत्ययःतेषांपक्षव्यपरोपणे पक्षच्छेदेउचितंस्फु
रत्प्रभामंडलं दीप्यत्प्रभायामंडलंयस्मिन्तत् अस्त्रंवज्रायुधंआददेजग्राह ६० रघुरिति रघुस्तेनवज्रेणभृशमत्यर्थं वक्ष
सिताडितोहतः सन् सैनिकानामश्रुभिःसहभूमौपपात तस्मिन्पतितेरुरुदुरित्यर्थः निमेषमात्रात् तद्व्यथांदुःखंअ १७
वधूय तिरस्कृत्य सैनिकानां येहर्षनिस्वनाः क्ष्वेडास्तैःसहउत्थितश्च तस्मिन्नुत्थिते हर्षात्सिंहनादान्चक्रुरित्यर्थः ६१

तथापीति तथापिवज्रघातेपि शस्त्राणांव्यवहारेण व्यापारेण निष्ठुरे क्रूरे विपक्षभावे शात्रवे चिरंतस्थुषः-
स्थितवतोऽस्यरघोः वीर्यातिशयेन वृत्रंहतवानितिवृत्रहा ब्रह्मभ्रूणवृत्रेषुक्विप् तुतोष स्वयंवीर एव वीरंजा
नातीतिभावः कथंशत्रोःसंतोषोऽत आह हि यतः गुणैःसर्वत्र शत्रुमित्रोदासीनेषुपदमंघ्रिर्निधीयते गुणैःस

तथापिशस्त्रव्यवहारनिष्ठुरे विपक्षभावेचिरमस्यतस्थुषः तुतोषवीर्यातिशयेन वृत्र-
हा पदंहिसर्वत्रगुणैर्निधीयते ६२ असह्यमद्रिष्वपिसारवत्तयानमेत्वदन्येनविसोढ
मायुधम् अवेहिमांप्रीतमृतेतुरंगमात्किमिच्छसीति स्फुटमाह वासवः ६३

वर्त्रसंक्रम्यत इत्यर्थः गुणाःशत्रूनप्यावर्जयंतीतिभावः ६२ असह्यमिति सारवत्तया दृढवत्तया अद्रिष्वप्य
सह्यमप्रतिबंधं मे आयुधंवज्रं त्वदन्येननविसोढं अतोमां प्रीतसंतुष्टमवेहि तुरंगमादृते तुरंगमंवर्जयित्वा
अन्यारादितरर्तेइत्यादिनापंचमी वरंवृणीष्वेति तंवासव आह तुरंगमादन्यद्देयंनास्तीतिभावः ६३ ७ ॥

ततइति ततो नरेंद्रसूनुः रघुः निषंगात्तूणीरादसमग्रं यथातथोद्धृतं सुवर्णपुंखद्युतिभिः रंजिता अंगुल्योयेन तमिषुं
प्रतिसंहरन्निवर्तयन् नाप्रहरंतं प्रहरेदितिनिषेधादितिभावः प्रियंवदतीतिप्रियंवदः प्रियवशेवदः खच्चितिखच्
प्रत्ययः अरुर्द्विषदित्यादिनामुमागमः सुरेश्वरंप्रत्यवदत् नतुप्राहरदितिभावः ६४ अमोच्यमिति हेप्रभोइंद्र अ
श्वममोच्यंमन्यसेयदि ततस्तर्हि अजस्रदीक्षायांसंततदीक्षायांप्रयतःसमद्गुरुर्ममपिता विधिनैवकर्मणिसमाप्तेसति

ततोनिषंगादसमग्रमुद्धृतंसुवर्णपुंखद्युतिरंजितांगुलिं नरेंद्रसूनुःप्रतिसंहरन्निषुंप्रियंवदंप्रत्यवदत्सुरेश्वरं
६४ अमोच्यमश्वंयदिमन्यसेप्रभोततःसमाप्तेविधिनैवकर्मणि अजस्रदीक्षाप्रयतःसमद्गुरुः क्रतोरशेषेणफ
लेनयुज्यतां ६५ यथाचवृत्तांतमिमंसदोगतस्त्रिलोचनैकांशतयादुरासदः तवैवसंदेशहराद्विशांपतिःशृणो
तिदेवेशतथाविधीयताम् ६६ क्रतोर्यज्ञस्ययत्फलंतेनफलेनाशेषेणकृत्स्नेनयुज्यतां युक्तोस्तु अश्वमेधसमग्रफल-
लाभेकिमश्वेनेतिभावः ६५ यथेति सदोगतः सदोगृहंगतः त्रिलोचनस्येश्वरस्य एकांशतया अष्टानामन्यतममूर्त्तित्वा
त् दुरासदोमाहेशोदुःप्रापोविशांपतिर्नृपतिः यथाइमंवृत्तांतंवार्तां वृत्तांतःस्यात्प्रकरणेप्रकारे कार्त्स्न्यवार्तयोरि १८
त्यमरः तववसंदेशहराद्वार्ताहरादेव शृणोतिच हेदेवेश इंद्र तथाविधीयताम् ६६ ७ ७

तथेति मातलिसारथिरिंद्रः रघोःसंबंधिनंकामंमनोरथं तथेति तथास्त्विति प्रतिशुश्रुवान् प्रतिश्रुतवान् भाषायांसदवसश्रुवइतिक्कसुप्रत्ययः यथागतं ययौ सुदक्षिणासूनुरपि नातिप्रमनाः विजयलाभेऽप्यश्वनाशान्नातीवतुष्टःसन् नञर्थस्यनशब्दस्यसुप्सुपेतिसमासः नृपस्यसदो गृहंप्रतिन्यवर्तत ६७ तमिति हरेरिंद्रस्य शास-

तथेतिकामंप्रतिशुश्रुवान्रघोर्यथागतंमातलिसारथिर्ययौ नृपस्यनातिप्रमनाःसदो
गृहंसुदक्षिणासूनुरपिन्यवर्तत ६७ तमभ्यनंदत्प्रथमंप्रबोधितःप्रजेश्वरःशासन
हारिणाहरेः परामृशन् हर्षजडेनपाणिनातदीयमंगंकुलिशव्रणांकितम् ६८

नहारिणापुरुषेण प्रथमंप्रबोधितोज्ञापितः वृत्तांतमितिशेषः प्रजेश्वरो दिलीपः हर्षजडेन हर्षशिशिरेणपाणिना कुलिशव्रणांकितं तस्यरघोरिदंतदीयंअंगंशरीरं परामृशन्स्पृशन् तंरघुमभ्यनंदत् ६८ ७

इतीति इतिहेतुप्रकरणप्रकाशादिसमाप्तिष्वित्यमरः महनीयशासनः पूजनीयाज्ञः क्षितीशइति महाक्रतूनामश्वमेधानां नवभिरधिकां नवतिं एकोनशतं आयुषः क्षयेसति दिवं स्वर्गमारुरुक्षुरारोढुमिच्छुः सोपानानां परंपराणां पंक्तिमिव ततान ६९ अथेति अथविषयेभ्यो व्यावृत्तात्मा निवृत्तचित्तः सदिलीपो यथाविधियथाशास्त्रं यूनेसूनवे नृपतिककुदं राजचिन्हं ककुद्दत्ककुदं श्रेष्ठेवृषांकेराजलक्ष्मणीतिविश्वः सितातपवारणं श्वेतच्छत्रं दत्वा

इतिक्षितीशोनवतिंनवाधिकांमहाक्रतूनांमहनीयशासनः समारुरुक्षुर्दिवमायुषःक्षये
ततानसोपानपरंपरामिव ६९ अथसविषयव्यावृत्तात्मायथाविधिसूनवेनृपतिककुदंदत्वा
यूनेसितातपवारणं मुनिवनतरुच्छायांदेव्यातयासहशिश्रियेगलितवयसामिक्ष्वाकूणामिदं
हिकुलव्रतम् ७०

तयादेव्यासुदक्षिणयासह मुनिवनतरोः छायांशिश्रिये श्रितवान् वानप्रस्थाश्रमंस्वीकृतवानित्यर्थः तथाहि गलितवयसां वृद्धानामिक्ष्वाकूणामिक्ष्वाकोर्गोत्रापत्यानां तद्राजसंज्ञकत्वादणोलुक् इदंवनगमनं कुलव्रतंहि देव्यासहइत्यनेन सपत्नीकवानप्रस्थाश्रमउक्तः तथाचयाज्ञवल्क्यः सुतेविन्यस्तपत्नीकस्तयावानुगतोवनम् वानप्रस्थोब्रह्मचारीसाग्निःसोपासनोव्रजेदिति हरिणीवृत्तमेतत् रसयुगहयैर्न्सौम्रौस्लौगोयदाहरिणी १९

तदेतिलक्षणात् ७० इतिश्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलचलमल्लिनाथसूरिविरचिता

इतिश्रीरघुवंशेमहाकाव्येकालिदासकृतौरघूत्पत्तिवर्णनोनामतृतीयःसर्गःसमाप्तः

यांरघुवंशव्याख्यायांसंजीविनीसमाख्यायांतृतीयःसर्गःसमाप्तः ३ बापुहरशेटदेवळेकर यांणीं आपले· छाप·छापिलें

